॥ श्रीः ॥

गोकुलदास संस्कृत ग्रन्थमाला

११

# निबन्ध-चन्द्रिका

( संस्कृत-निबन्धानां कमनीयः संग्रहः )


लेखकः

**डा० कृष्णदेव उपाध्याय**

एम. ए., पी-एच. डी.

साहित्य-शास्त्री, साहित्यरत्न

प्राध्यापक, डिग्री कालेज, ज्ञानपुर






CHAUKम्भा ओरियन्टालिया

A House oदुर्लभ ग्रन्थों के प्रकाशक एवं वितरक

VARANASI दिल्ली

प्रकाशक

**चौखम्भा ओरियन्टालिया**

पो० बाक्स नं० १०३२

वाराणसी–२२१००१ ( उ० प्र० ) भारत

टेलीफोन : ३३३४७६ टेलीग्राम : गोकुलोत्सव

---

शाखा—बंगलो रोड, ६ यू० बी० जवाहर नगर

( करोड़ीमल कालेज के पास )

दिल्ली—११०००७ टेलीफोन : २९११६१७



सप्तम संस्करण : १९९१

मूल्य रु० १५–००

---

मुद्रक— चारुप्रिंटर्स, गोलघर, वाराण

GOKULDAS SANSKRIT SERIES
NO. 11

# NIBANDHA-CHANDRIKĀ

( A good collection of Sanskrit Nibandhas )

By

Dr. KṚṢṆADEV UPĀDHYĀYA
M. A., Ph. D.,

*Sāhitya shāstri, Sāhityaratna*

*Prādhyāpak, Degree College, Jñānpur*

CHAUKHAMBHA ORIENTALIA

**A House of Oriental and Antiquarian Books**

VARANASI DELHI

*Publishers :*

**CHAUKHAMBHA ORIENTALIA**
Post Box No. 1032
VARANASI-221 001 ( India )
Telephone : 333476 Telegram : Gokulotsav

---

*Branch*—Bungalow Road, 9 U. B. Jawahar Nagar
**( Near Kororimal College )**
DELHI-110 007 Phone : 2911617







**सांख्यकारिका**

गौडपादभाष्य सहित

व्याख्याकर्त्री

विमला कर्णाटक

मूल्य रु० २०-००

## कविकाव्यप्रशंसा

किं तेन किल काव्येन मृद्यमानस्य यस्य ताः।
उदधेरिव नायान्ति रसामृतपरम्पराः॥ १॥

किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः॥ २॥

अप्रगल्भपदन्यासा जननीरागहेतवः।
सन्त्येके बहुलालापाः कवयो बालका इव॥ ३॥

किं तेन काव्यमधुना प्लाविता रसनिर्झरैः।
जडात्मानोऽपि नो यस्य भवन्त्यङ्कुरितान्तराः॥ ४॥

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्॥ ५॥

मुखमात्रेण काव्यस्य करोत्यहृदयो जनः।
छायामच्छामपि श्यामां राहुस्तारापतेरिव॥ ६॥

बोद्धारो मत्सरग्रस्ता विभवः स्मयदूषिताः।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्॥ ७॥

पदद्वयस्य संधानं कर्तुमप्रतिभाः खलाः।
तथापि परकाव्येषु दुष्करेष्वप्यसम्भ्रमाः॥ ८॥

क दोषोऽत्र मया लभ्य इति सञ्चिन्त्य चेतसा।
खलः काव्येषु साधूनां श्रवणाय प्रवर्तते॥ ९॥

उपपत्तिभिरम्लाना नोपदेशैः कदर्थिताः ।
स्वसंवेद्यसंवेद्यसाराः सहृदयोक्तयः ॥ १० ॥

बहूनि नरशीर्षाणि लोमशानि बृहन्ति च ।
ग्रीवासु प्रतिबद्धानि किं चित्तेषु सकर्णकम् ॥ ११ ॥

साध्वीव भारती भाति सूक्तिसद्व्रतचारिणी ।
ग्राम्यार्थवस्तुसंस्पर्शबहिरङ्गा महाकवेः ॥ १२ ॥

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ १३ ॥

कवीनां महतां सूक्तैर्गूढार्थान्तरसूचिभिः ।
विध्यमानश्रुतेर्मा भूद् दुर्जनस्य कथं व्यथा ॥ १४ ॥

यास्यति सज्जनहस्तं रमयिष्यति तं भवेच्च निर्दोषा ।
उत्पादितयापि कविस्ताम्यति कथया दुहित्रेव ॥ १५ ॥

अवसरपठितं सर्वं सुभाषितत्वं प्रयात्यसूक्तमपि ।
क्षुधि कदशनमपि नितरां भोक्तुः सम्पद्यते स्वादु ॥ १६ ॥

दुर्जनहुताशनतप्तं काव्यसुवर्णं विशुद्धिमुपयाति ।
दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥ १७ ॥

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षतिं न चार्थस्य ।
रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च ॥ १८ ॥

( सुभाषितावलिः )

# भूमिका

संस्कृतभाषायाः समत्व न केवलया भारतीयान्यभाषाया, अपि तु वैदेशिकीभिर्भाषाभिरपि तत्समत्वं न दृश्यन्ते। अनेनैव हेतुना प्राच्य-पौरस्त्यभाषाभाषिभिर्मुक्तकण्ठेन सर्वभाषामूर्द्धन्यास्पदमियं गीर्वाणवाणी गीयते, परन्तु भाषामिमां पिपठीषूणामन्तेवासिनां कृते गीर्वाणवाण्युपनिबद्धाः, सरसशब्दगुम्फिताः, हृदयग्राहिणो नेकेऽपि प्रचलिता निबन्धग्रन्थाः सन्ति, यानवलम्ब्य परीक्षाप्रणालीमनुसरन्तो छात्राः संस्कृतनिबन्धलेखने पटुत्वं लभेयुरिति। परीक्षार्णवनिमग्नानां छात्राणामेतद्विषये न्यूनतामुपहासास्पदत्वञ्चाकलय्य खिद्यमानेन चेतसा मया 'निबन्धचन्द्रिका' नाम्नी रचनैषा चन्द्रिकेव विषयान् प्रकाशयन्ती विनिर्मिता।

वस्तुवैचित्र्येण, सरलशब्दसौन्दर्येण प्रशंसनीयां लेखनपद्धतिं प्रदर्शयन्तीयं 'चन्द्रिका' विदग्धचेतसां चेतसि मोदमादधाना निबन्धसौधमारुरुक्षूणाम्, रचनापाटवमीहमानानाम्, बी. ए., एम. ए., शास्त्राचार्य–परीक्षादित्सूनामन्तेवासिनां कृते सम्यक् सन्तोषमेष्यतीति सम्भावयामो वयम्।

अस्मिन ग्रन्थे रचितानां निबन्धानां प्रकारद्वयं समुल्लसति केचन सामान्यविषयमवलम्ब्य निर्मिता निबन्धा इण्टर, बी. ए.–मध्यमा-शास्त्रिपरीक्षादातुमुत्सुकानां विद्यार्थिनां कृते एव मुख्यतो वर्तन्ते; अपरे च

काव्यस्वरूपप्रयोजनादि-विशिष्टविषयानाश्रित्य रचिता निबन्धा अतीव प्रौढिमादधाना आचार्य-एम.ए.-परीक्षासु साफल्यमवाप्तिकामानां छात्राणां भृशमुपकारं विधास्यन्तीति जागर्ति दृढोऽस्माकं विश्वासः। नैकविधलेख-सहाय्याय पण्डित रतिनाथझा-एम. ए. शास्त्राचार्यमहोदयाय संस्कृतमहाविद्यालयस्याध्यक्षेभ्य पण्डितप्रवरमहादेवशास्त्रिभ्यश्च स्वीयान् धन्यवादान् आनन्दभूतेन हृदयेन वितरामो वयमिति।

अस्मिन् नवे संस्करणे ग्रन्थस्यास्य परिशोधनं कृतमस्माभिः। पूर्वसंस्करणादेतत् संस्करणं नातिभिन्नम्। आशासे छात्राणां पूर्वदेव एतदपि सस्करणं ज्ञानवर्धनं करिष्यतीति।

ज्येष्ठपूर्णिमा सं० २०२४<br>
दिनांक २२–६–६७

कृष्णदेव उपाध्यायः

# विषय-सूची


| | विषयः | | पृष्ठम् |
|---|---|---|---|
| १ | विद्याधनं सर्वधनप्रधानम् | ... | १ |
| २ | विद्याधर्मेण शोभते | ... | ६ |
| ३ | सत्यान्नास्ति परोधर्मः | ... | ८ |
| ४ | धन-महिमा | ... | ११ |
| ५ | काशी-नगरी | ... | १५ |
| ६ | गङ्गा गौरवम् | ... | १६ |
| ७ | जननी | ... | २४ |
| ८ | जन्मभूमिः | ... | २७ |
| ९ | त्याज्यं न धैर्यं विधुरेऽपि काले | ... | ३३ |
| १० | उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः | ... | ३७ |
| ११ | नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण | ... | ४१ |
| १२ | संघे शक्तिः कलौ युगे | ... | ४४ |
| १३ | न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे | ... | ४६ |
| १४ | दीर्घौ बुद्धिमतो बाहू | ... | ४९ |
| १५ | परोपकारः | ... | ५२ |
| १६ | अहिंसा परमो धर्मः | ... | ५७ |
| १७ | ब्रह्मचर्यम् | ... | ६० |
| १८ | आर्जवं हि कुटिलेषु न नीतिः | ... | ६४ |
| १९ | राष्ट्रभाषा संस्कृतम् | ... | ६८ |
| २० | आधुनिका संस्कृत-पठन-पाठन-प्रणाली | ... | ७४ |
| २१ | संस्कृतकाव्येषु प्रगतिशीलत्वम् | ... | ७७ |
| २२ | न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते | ... | ८२ |
| २३ | सर्वे क्षयान्ता निचयाः | ... | ८५ |

२४ मानवताया आदर्शः ... ८६
(क) भगवान् बुद्धः ... ८६
(ख) महात्मा गान्धी ... ६२
२५ शिक्षाया आवश्यकं साधनम् ... ६७
(क) चित्रपटम् ... ,,
(ख) समाचारपत्राणि ... ६६
२६ दोषाणां दूरीकरणम् ... १०३
(क) हिन्दुसमाजस्य परिष्कृतिः ... ,,
(ख) ग्रामाणामुन्नतिसिद्धिः ... १०७
२७ महाकाव्यस्य विकासः ... १११
२८ काव्यम् ... ११५
२६ काव्यप्रेरणा ... १२०
३० प्राचीनं नाट्यशास्त्रम् ... १३२
३१ कालीदासः ... १३६
३२ श्रीहर्षः ... १४७
३३ काव्यप्रयोजनविमर्शः ... १५८
३४ श्रमणसंस्कृतौ सौन्दर्य-विचारः ... १६१

## परिशिष्टम्

(क) लौकिकन्यायमाला ... १६६
(ख)सुभाषितानि ... १७१
(ग)रमणीयप्रयोगाः ... १७४



# निबन्ध-चन्द्रिका



## १. विद्याधनं सर्वधनप्रधानम्

सर्वशक्तिमता भगवता जगति समुत्पादितेषु द्रव्येषु विद्या नाम विद्यते द्रव्यं सर्वश्रेष्ठं सर्वप्रधानं च। मनुष्येभ्यो विद्याया अतीव आवश्यकता वर्तते। यः पुरुषो विद्याविहीनोऽस्ति स असभ्यः, ग्रामीणः, मूर्खः, निरक्षरभट्टाचार्यः इत्याद्यनेकोपाधिभिर्विभूष्यते जनैः। किं बहुना साहित्यसंगीताभ्यां विरहितस्य पुरुषस्य तुलना साक्षात्पशुना कृता श्रीमता भर्तृहरिणा। तेन यदुक्तम्—

साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम्॥

तत्तु समीचीनं प्रतिभाति। यथा पशुर्ज्ञानेन विना धर्माधर्मयोर्विचारं न कर्तुं प्रभवति, तथैव मनुष्योऽपि विद्यया विरहितः कर्तव्याकर्तव्ययोर्विवेकं कर्तुं न शक्नोति। यथा पशूनां जीवितमाहारनिन्द्राभयमैथुनेषु नितरां व्यस्तं वर्तते, तथैव मूर्खस्यापि जीवनमस्ति। विद्यैव पशुमनुष्ययोः भेदबुद्धिमुत्पादयति। सम्यगेवोक्तं केनापि कविना यत्—

आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥

को धर्मः, कोऽधर्म इति तु विद्ययैव ज्ञातुं शक्यते। अत एव विद्याविरहितस्य पुरुषस्य तुलना पशुनाऽतीव समीचीना वर्तते। मूर्खस्य जीवनं व्यर्थमेव, यतः स न किमपि कार्यं कर्तुं प्रभवति। विद्वद्भिः तस्य निरादरः क्रियते, जनैः स उपहस्यते, विचारशीलैः नाद्रियते; स तु धराया भारभूत एव तिष्ठति।

शुनः पुच्छमिव व्यर्थं जीवनं विद्यया विना।
न गुह्यगोपने शक्तं न च दंशनिवारणे ॥

अत एव "विद्या विहीनः पशुः" इति भाषितं निश्चितमेव सुभाषितं प्रतिभाति।

"विद्याधनं सर्वधनप्रधानम्" इति यदुक्तं तत्र को हेतुः ? तदुच्यते—विद्याधनस्य सर्वश्रेष्ठेयं विशिष्टता वर्तते यत् सर्वं धनं व्ययात् क्षयमायाति—नाशं प्राप्नोति, परन्तु विद्याधनं संचयात् क्षयं गच्छति, व्ययाच्च वृद्धिमायाति। कुबेरस्यापि असंख्यः कोशो व्ययाद् निश्चितमेव कस्मिंश्चिद् दिने रिक्तो भविष्यति; परन्तु अहो विशेषता विद्याधनस्य यदिदं मुहुर्मुहुर्व्ययमापाद्यमानमपि नैव नाशं प्रयाति। निश्चितमेव न कदापीदृशः कोशः संसारेऽस्मिन् दृष्टः श्रुतो वा। केनापि कविना सम्यगेवोक्तं यत्—

अपूर्वः कोऽपि कोशोऽयं दृश्यते तव भारति।
व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥

द्वितीयो विशेषोऽस्य विद्याधनस्यायमस्ति यदिदं धनं न केनापि चोरयितुं शक्यते। अत्यन्तनिपुणा अपि चौरा विद्याधनं कौशलेनापि चोरयितुं न शक्नुवन्ति, परन्तु तेऽन्यद्धनं लीलयैव हर्तुं पारयन्ति। क्रूरोऽपि राजा विद्याधनं हर्तुं न प्रभवति। धनमिदं तस्याधिकारस्य नास्ति विषयः। न कोऽपि विद्वान् पण्डितो राजाज्ञया विद्याविरहितः कर्तुं पार्यते। विद्याधनं भ्रातृभाज्यमपि नास्ति। भ्रातरो विद्याधनं न विभक्तुं प्रभवन्ति, यतः कुक्षिस्थिता विद्या न विभागकरणस्य विषयः। अतो भ्रातॄणां धनविभाजनसमये विद्याया विभाजनं नैव क्रियते। धनस्य राशिर्भारयुक्तो भवति। न च लक्षसंख्यकाः किंवा दशसहस्रसंख्यका रूप्यका अत्यन्तश्रमोत्पादकत्वाद् भारकरणाच्च केनापि दूरं वोढुं पार्यन्ते, परन्तु विद्याधनं न कदाऽपि भारकारि भवति। न कोऽपि महामहोपाध्यायः समधिकविद्याऽध्ययनकारणेन केनाप्यन्येन पुरुषेण सह तुलायां गुरुतां प्राप्नोति। न च सर्वतन्त्रस्वतन्त्रः कोऽपि षट्शास्त्री स्वागाधपाण्डित्येन मार्गमटितुं श्रममनुभवति। अस्माच्

कथनस्यायमेवाभिप्रायो यद् विद्याधनं न कदाऽपि भारं करोति। उक्तञ्च केनापि सुमतिना—

न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥

अन्यच्च—

वसुमतीपतिना न सरस्वती बलवता रिपुणाऽपि न नीयते।
समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते ॥

हर्तुर्न गोचरं याति दत्ता भवति विस्तृता।
कल्पान्तेऽपि न या नश्येत् किमन्यद्विद्यया समम् ॥

सदा सहचरी वर्तते विद्या मनुष्यस्य। तस्य विविधेन प्रकारेणोपकारं करोति। विद्या मनुष्यं मातेव रक्षति। यथा माता बाल्यकाले स्वशिशून् अबोधबालकान् व्याधिभ्यो रक्षति, तथैव विद्याऽपि अनुभवशून्यस्य जनस्यानेकापद्भ्यस्त्राणं करोति। विद्या पितेव हितकार्ये मनुष्यं नियोजयति। यथा पिता स्वपुत्रं कुशलतासमन्विते हितकारके च कार्ये प्रेरयति तथैव विद्यापि मनुष्याय कर्तव्याकर्तव्ययोर्ज्ञानं ददाति, येन ज्ञानेन प्रेरितो मनुष्यो हितकारकं कार्यं करोति, अहितं च त्यजति। विद्या मनुष्यस्य शोभां विस्तारयति। राजसभायां विद्वानेव हि पुरुषः समादरं प्राप्नोति, राज्ञा चाद्रियते।

विद्या मनुष्यस्य दिक्षु कीर्तिं विस्तारयति, सप्तसमुद्रपारमपि यशः प्रापयति। अधुनापि यत् डा० रवीन्द्रनाथठाकुरः, सर राधाकृष्णः, सर वेङ्कटेशरमणः, आचार्यरायश्च संसारे प्रसिद्धाः पुरुषा वर्तन्ते, तत्किं विपुलेन धनेन? उताहो प्रभूतेनाधिकारेण? नहि नहि विद्ययैव। कोऽधुना संसारेऽस्मिन् साक्षरोऽस्ति येन जगत्प्रसिद्धस्य स्वनामधन्यस्य रवीन्द्रनाथठाकुरस्य नाम नैव श्रवणगोचरीकृतम्? कोऽस्ति खलु वैज्ञानिको यः 'रमणम्' न जानाति? अस्माकं कथनस्यायमेव अभिप्रायो यद् विद्यया जगति विपुलां कीर्तिं लभते मनुष्यः। विद्यायाः प्रशंसायां केनापि समुचितमेवाभिहितम्—

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या॥

विद्यापठनेन मनुष्यो धनं प्राप्नोति। अत एव सुखं करोति। यदा मनुष्यो विदेशं गच्छति, तदा विद्यैव तस्य सहायतां करोति। अज्ञात-प्रदेशेऽपि यद् मनुष्यो गच्छति तत्तु विद्याबलेनैव। कोलम्बसमहोदयेन यदमेरिकायाः अन्वेषणं कृतं तद् विद्याबलेनैव। अधुनाऽपि वायु-यानचालकाः निराधारे मार्गे यत् स्ववायुयानं चालयन्ति तदपि विद्या-बलस्यैव प्रभावः। किं बहुना, सीमारहितेऽपि समुद्रे ये पोतं चालयन्ति तेऽपि पोतविद्ययैव तत् कार्यं सम्पादयन्ति। यथापूर्वमेवोक्तं, राजसभासु विद्यैव पूज्यते, न धनम्। अत एव विद्यायाः सर्वदा सर्वदा चातीव आवश्यकता वर्तते नराणां कृते। उक्तञ्च—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्,
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतम्,
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः॥

चतुर्वर्गस्य फलप्राप्तिरपि सुखाद् विद्ययैव संभवति। विद्या विनयं ददाति। विनयेन च मनुष्यः पात्रतां याति। पात्रत्वाद् धनमाप्नोति। अत एव चतुर्वर्गस्य प्रथमो वर्गो धनरूपः (अर्थः) विद्ययैव लभ्यते। धनेन मनुष्यो दानं ददाति। धर्मशालानिर्माणम्, मन्दिराणां जीर्णो-द्धारम्, तीर्थाटनम्, देवपितृपूजनादिकं पुण्यं कर्म करोति। अत एव स धर्मस्य संचयं करोति। उक्तञ्च—

विद्या ददाति विनयं, विनयाद्याति पात्रताम्।
पात्रत्वाद् धनमाप्नोति, धनाद् धर्मस्ततः सुखम्॥

यथा धनेन धर्मः सञ्चीयते तथैव धनेनैव कामस्यापि प्राप्तिर्भवति। धनेन मनुष्यः सुधाधवलितं प्रासादं निर्माति, जलक्रीडार्थं वापीतटाकानां

निर्माणं करोति। नानाऽऽस्वादजनकानि भोजनानि भुङ्क्ते, बहुमूल्य-वस्त्राणि परिधत्ते। अनेन प्रकारेण तृतीयवर्गस्य कामस्यार्जनं करोति। विद्यया मनुष्यः आत्मपरमात्मनोरभेदं पश्यति। क्रमशः स ब्रह्म जानाति, तथा तद् ज्ञात्वा तद्रूपो भवति। श्रुतिभिरपि प्रतिपादितं यत् "ब्रह्मविद् ब्रह्मैव भवति, ऋते ज्ञानान्न मुक्तिः।" अत एव मुक्तौ ज्ञानस्य परमावश्यकता वर्तते। अनेन विधिना मनुष्यो स्वजीवनस्य समग्रं फलं चतुर्वर्गाख्यरूपम् अर्थधर्मकाममोक्षाभिधं विद्ययैव प्राप्नोति।

विद्ययैव कालिदासभवभूतिजयदेवादयो महाकवयोऽमरत्वं प्राप्नुवन्। तेषां कोमलकान्तपदावली साम्प्रतमपि सहृदयानां कर्णकुहरेषु सुधाधारां वर्षति। अधुनाप्युदयनाचार्यस्य भारती लीलायते। भक्ततुलसीदासस्य 'भाषा' भणितमद्यापि भक्तितरङ्गिणीं प्रवाहयति। अत एव श्रुत्यापि सत्यं तारस्वरेणोक्तं यत्—

"विद्ययाऽमृतमश्नुते" इति।



## २. विद्या धर्मेण शोभते

विद्या सर्वधनेषु प्रधानं धनम्—इत्यत्र नास्ति कस्यापि सन्देहलेशः। परन्तु धर्मेण विहीना विद्या तथैव न शोभते, न च रुचिरतां प्राप्नोति, यथा जलेन रहितः कूपः, प्राणैर्विरहितं शरीरम्, तृणैर्विहीनं वनम्, पुष्पैर्विना चोद्यानं न शोभन्ते। यथा प्राणैर्विरहितं शरीरं न किमपि कार्यं कर्तुं शक्नोति तथैव धर्मेण विरहिता न कमपि शुभमनुष्ठानं कर्तुं प्रभवति विद्या। यथा सारथिना विहीनो रथो राजमार्गमुत्सृज्य निम्नोन्नतं मार्गं गच्छति, तथैव धर्मरूपसारथिना विहीना विद्या न शुभाशुभयोः कार्ययोर्विवेकं विधातुं शक्नोति। धर्मेणैव मनुष्यः कर्तव्याकर्तव्ययोर्ज्ञानं कर्तुं क्षमते। यदि विद्वान् पुरुषोऽपि धर्मेण समन्वितो न स्यात्, तदा तस्याखिलमपि कार्यं धर्महीनं भवेत्। विद्यायाः पठनमावश्यकम्, परन्तु तस्याः सदुपयोगो धर्मबुद्ध्या एव भवितुमर्हति। अधीतिबोधाचरणप्रचारणानि यानि विद्यायाः प्रतिष्ठापकानि चतुर्विधानि कार्याणि महाकविना श्रीहर्षेणोक्तानि, तान्यपि धार्मिकबुद्ध्या एव समन्वितानि स्वसामर्थ्यं लभन्ते। यदा कोऽपि पुरुषो विद्यायाः पारगामी भवति, तदा तस्यायं धर्मो यत् स स्वाधीतविद्यायाः जनमण्डलीषु प्रचारं कुर्यात्। विद्यानुकूलाऽऽचरणं च तस्यावश्यकं कर्तव्यम्। यदा कोऽपि पुरुषो योगशास्त्रं पठति, तदा तदनुकूलाचरणं तस्य धर्मः। विद्याया आचरणप्रचारणश्च ज्ञानं धर्मेणैव भवितुमर्हति। अत एव विद्यया सह धर्मस्यातीव आवश्यकता विद्यते। सम्यगुक्तं केनापि कविना यथा—

शास्त्राण्यधीत्यापि भवन्ति मूर्खाः।
यस्तु क्रियावान् पुरुषः स विद्वान्॥

बहूनि शास्त्राणि पठित्वाऽपि पुरुषो मूर्खो भवति, यस्तु क्रियावान्, क्रियाशीलः, सदाचरणादियुक्तः स एव विद्वान् कथ्यते जनैः। चिन्त्यतां तावत्—एकः पुरुषः सर्वतन्त्रस्वतन्त्रः, षट्शास्त्री, सकलदर्शनपारगामी, महापण्डितश्चास्ति, परन्तु स यदि शास्त्रनिन्दितं मधुपानम्, लोकनिन्दितं

गन्धर्ववीथिकासेवनम्, धर्मविरुद्धम् असत्यभाषणम्, द्यूतैः चित्तप्रसादनम्, कदर्याऽऽचरितञ्च करोति; तर्हि किं शिष्टजनैः ग्रामीणैरपि वा विद्वान् कथितुं पार्यते ? न कदापि, न कथमपि । अत्र को हेतुः ? किं कारणम् ? समधिगतसकलशास्त्रतत्त्वोऽपि कथं स मूर्खो जनैरभिधीयते ? अत्र तस्य धर्माभाव एव प्रधानं कारणम् । सकलविद्याधिकारी भूत्वाऽपि स पुरुषो धर्मेण विरहितोऽस्ति । स न जानाति को धर्मः कश्चाधर्म इति । अत एव जनैस्तस्य 'मूर्ख' इति संज्ञा क्रियते । अतोऽयं राद्धान्तो यद्धर्मेण विरहिता विद्या न कदाऽपि शोभां प्राप्नोति ।

अधुनाऽऽङ्गलभाषाविद्यालये विश्वविद्यालये वा या शिक्षा प्रदीयते सा धर्मेण सुतरां हीना वर्तते । अत एवास्याः विषमः परिणामो जायते । विश्वविद्यालयेभ्यः निर्गताः स्नातका धर्मेणास्पृष्टमतयो भवन्ति । ते सदाचारं न जानन्ति, गुरूणां समादरं न कुर्वन्ति, शीलं नानुभवन्ति, शास्त्रवचनमुपहसन्ति, देवताभ्यर्चनञ्च निन्दन्ति । अत एव समाजे तेषां निन्दा भवति । जनतायाः हृदये तेषामादरो न जायते । अत एव वयं मुक्तकण्ठेन स्वीकुर्मो यद् धर्मेण विरहितो न कोऽपि पुरुषः विद्वानिति पदवीं लब्धुं शक्नोति । अतो यदुक्तं केनचित् 'विद्या धर्मेण शोभते' इति, तत् सुभाषितमतीव समीचीनं प्रतिभाति ।



## ३. सत्यान्नास्ति परो धर्मः

असारे खल्वस्मिन् संसारे सत्यमेवैकं साराख्यं वस्तु। सत्येन विना सकलं वस्तु मिथ्याऽसत्यं वा कथ्यते। अस्माकं धर्मशास्त्रेषु सत्यस्य महिमा समुल्लिखितः विद्यते। सत्यं सर्वधर्मेषु श्रेष्ठं मन्यते सर्वैरपि विद्वद्भिः। 'सत्यमेव जयते, नानृतम्' इति भणता कृष्णमुनिना सत्यस्य महत्त्वं सम्यगेव प्रतिपादितम्। न केवलमार्यधर्मे, परन्त्वन्येष्वपि धर्मेषु सत्यस्य महात्म्यं सविस्तरं प्रतिपादितं वर्तते। ख्रीष्टधर्मसंस्थापकेन महात्मना 'ईसा' महोदयेनाऽपि सत्यस्य महत्त्वं स्वीकृतमुपदिष्टञ्च। अस्माकं वेदाः, पुराणानि, इतिहासाश्च तारस्वरेण सत्यस्य माहात्म्यमुद्घोषयन्ति। प्राचीनकाले विद्यार्थिनां समावर्तनसंस्कारसमये महामतिना कुलपतिना यः समुपदेशः संदिष्टश्चासीत् तस्मिन्नपि सत्यं शीर्षस्थाने वर्तते। 'सत्यं वद, धर्मं चर स्वाध्यायान्मा प्रमदः' इत्युपदेशं कुर्वता गुरुणा सत्यस्य यत् प्रथमं सन्निवेशनं कृतं तत् समुचितमेव।

श्रूयते हि पुरा यद् भारतीयाः प्राणैः पणैरपि सत्यं क्रीणन्ति स्म। पुरा किल हरिश्चन्द्रो नाम राजा बभूव। तेन राज्ञा कदाचित् स्वप्ने स्वाखिलं राज्यं गुरवे विश्वामित्राय दातुं प्रतिश्रुतम्। स्वप्नेऽपि कृतं निश्चयं सत्यं मन्यमानः, स महात्मा स्वसमग्रं राज्यं तस्मै ददौ। अवशिष्टस्य धनस्य च दानाय स्वां पत्नीम्, पुत्रम्, अथ च स्वशरीरमपि कस्मैचन चाण्डालाय विक्रीतवान्। विविधविपत्तिसमूहं पश्यन्नपि स न कदाऽपि सत्यं विजहौ, न च कदाऽपि सत्यात् पराङ्मुखो बभूव। अहो तस्य सत्यनिष्ठा! अहो तस्य सत्यपरायणता! धन्या सत्यस्य कृते तस्य दुःखसहनशीलता।

पुरा अशोको नाम:कोऽपि महान् बौद्धो राजा महीं रञ्जयामास। स स्वप्रजायाः भूत्यर्थं नैतिकशिक्षाप्रचारार्थञ्च प्रसिद्धेषु नगरेषु शिलास्तम्भान् निर्माय तेषु सत्यस्य महिमानमुट्टङ्कितवान्। सत्यस्यासीदेवतावान् महिमा प्राचीने खलु भारते, परन्तु साम्प्रतं कलिकल्मषग्रस्ते

भारते नास्ति सत्यस्य तद् महत्त्वं यत् प्राचीने काले आसीत् । अधुना परवञ्चनमेव पाण्डित्यम्, असत्यभाषणपटुतैव वावदूकता, पिशुनतैव चातुर्यं कथ्यते; परन्तु नासीद् दशेयं प्राचीने समये । तत्कालीनजना हृदयेन सरला वचसा सत्यभाषिणः, व्यवहारेण कुशलाः आसन् । किं बहुना 'फाहियान' नामधेयचीनदेशीयः परिव्राजकोऽपि भारतीयानां सत्यभाषणप्रियतां प्रमाणीकरोति । अत एव भारतीयशास्त्रेषु सत्यस्य महत्त्वप्रतिपादनेन, भारतीयजनतायाः सत्यपरायणवार्तया चालम् ।

यद् वस्तु यादृशम्, यद् रूपेण च वर्तते तस्य तादृशमेव वर्णनं सत्यमिति कथ्यते, तद्विपरीतम् असत्यम् । असत्यभाषणमनैसर्गिकं सत्यविरोधि च वर्तते, अत एव असत्यभाषणे पापं विद्यते । अतोऽस्माकं धर्मशास्त्रेऽसत्यभाषणं हेयम्, निन्दितं, पापयुक्तं च वर्णितमस्ति । न कदापि केनाऽपि मिथ्याभाषणं कर्तव्यमिति धर्मशास्त्रस्यादेशः, परन्तु सन्ति कतिपयविशेषावस्था यासु असत्यभाषणं समुपदिष्टं धर्मशास्त्रैः यथा रतिरहस्यकथाः, सुरतसंभोगसंलापाः, कस्यापि निरपराधिनः प्राणहानिः; परन्तु विहाय विशेषावस्थाः इमाः मनुष्यैः सर्वथा सर्वदा च सत्यस्यैव भाषणं कर्तव्यम् । आंग्लभाषायां यत् सुभाषितं वर्तते 'सत्यमेवेश्वरः' तत्र नास्ति सन्देहलेशः । सत्यभाषणेन भगवतोऽपि प्राप्तिर्भवितुं शक्नोतीति विषयेऽस्मिन् कस्य सुपुरुषस्य सन्देहोऽपि स्यात् ? अत एव पूर्वोक्तं सुभाषितं नितरां समीचीनमेव प्रतिभाति ।

सत्यस्य महिमा न केनापि गातुं शक्यते । तत्र सहस्रमुखः शेषो न समर्थो वर्तते, तत्र का कथा षण्मुखस्य कार्तिकेयस्य चतुर्मुखस्य ब्रह्मणो वा ? कलिकालकल्मषजीर्णे, सत्यमहत्वपराङ्मुखेऽपि अस्मिन् समये सत्यस्य अहिंसायाश्च कीदृशं महत्त्वं प्रतिपादितं महात्मना गान्धिना इति कस्य साक्षरपुरुषस्य नाविदितम् । तेन खलु सत्यप्राणेन, सत्यपरायणेन च महात्मना असत्यकर्दमे मग्ना राजनीतिरूपा गौरुद्धृत्य सत्यस्य स्थिरभूमौ स्थापिता ।

किं बहुना, वैदिकधर्मे, अन्येषु च धर्मेषु सत्यभाषणमेव सर्वप्रधानं

विद्यते इति धर्मजिज्ञासूनां नापरोक्षम्। महाभारते व्यासमुनिना भूयसी महत्ता प्रदर्शिता सत्यस्य, उक्तञ्चापि तेन महामुनिना—

> अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
> अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥
> सर्ववेदाधिगमनं सर्वतीर्थावगाहनम्।
> सत्यञ्च वचनं राजन् समं वा स्यान्न वा समम्॥
> न हि सत्यसमो धर्मो, न सत्याद् विद्यते परम्।
> न हि तीव्रतरं किञ्चिदनृतादिह विद्यते॥
> (महाभारते, आदिपर्व ७४. १०३–१०६)



## ४. धन-महिमा

संसारेऽस्मिन् समग्राणि कार्याणि धनेनैव सिध्यन्ति। धनेन विना न कस्यापि वस्तुनः स्थितिर्विद्यते। ब्रह्मचर्याश्रमे विद्याध्ययनाय धनस्यावश्यकता विद्यते। गृहस्थाऽऽश्रमे स्वकुटुम्बस्य पालनपोषणार्थं दीनदुःखितानामार्तजनानाञ्चोदरदरीभरणार्थं धनस्य संग्रहः आवश्यकः। वानप्रस्थाश्रमे तीर्थाटनार्थं स्वभार्यायाः स्वस्य च सुखेन निवासार्थं धनमीहते लोकः। किं बहुना, संन्यासाश्रमेऽपि धनस्यावश्यकताऽस्त्येव। अनेन प्रकारेणेदं स्पष्टं प्रतिभाति यद् यावज्जीवनं धनस्य संचयः सुतरामावश्यकः धनेन विना न कोऽपि पुरुषः कस्मिन्नपि आश्रमे स्वजीवनयात्रां सुखेन कर्तुं प्रभवति।

अस्मिन् जगति महतो महत्, अल्पादल्पमपि कार्यं धनेन विना न कदाऽपि संभवति। पाठशालायाः निर्माणम्, किंवा मन्दिरस्योद्घाटनम्, किंवा धर्मशालायाः निर्मितिः, किंवा तीर्थाटनस्य सम्पादनम्, किंवा दरिद्रेभ्यो द्रव्यवितरणम्, किंवा कूपवापीतडाकानां जीर्णोद्धारः, किंवा यागस्य विधानम्, किंवाऽतिथीनां सत्कारः, मृतस्यान्त्येष्टिक्रियाऽपि विना द्रव्येण संभवति? दानस्याभिलाषः, परदुःखनाशस्येच्छा, बुभुक्षितस्योदरदरीपूरणस्याकांक्षा सर्वा अपि शुभेच्छा धनाभावाद् अजागलस्तनवद् निष्फलतां प्राप्नुवन्ति।

हाटके जीवनस्य सुखदायकानि बहूनि द्रव्याणि सन्ति, परन्तु किं तानि द्रव्यहीनैः पुरुषैर्लभ्यन्ते? यस्य पार्श्वे धनं नास्ति स तु हाटके केवलं द्रव्याणि द्रष्टुं शक्नोति, न चास्वादितुं क्षमते मिष्टान्नम्। केनापि हास्यरसिकेन कविना सत्यमेवोक्तं यत्—

टका धर्मः टका कर्म, टकैव परमं सुखम्।
यस्य पार्श्वे टका नास्ति, हाटके टकटकायते॥

कलिकल्मषयुक्ते कालेऽस्मिन् स एव पुरुषः कुलीनः, गुणज्ञः, विद्वान्, वक्ता, प्रियदर्शनः सर्वगुणसम्पन्नश्च गण्यते यस्य पार्श्वे धनमस्ति।

पश्यन्तु तावदाधुनिकभारतीयानां ( देशी ) राज्ञां दशां। विद्याविहीनाः, परस्त्रीकामुकाः, परधनलोलुपाः, अत्याचारिणः, प्रजापीडकास्ते 'राजा', 'महाराजा', 'महाराजाधिराज', 'सरकार', 'हूज़ूर' इति विविधाभिः संज्ञाभिर्जनैः बोध्यन्ते समाद्रियन्ते च। महामतयः, अधिगतनिखिलशास्त्राः विद्वांसोऽपि तेषां दर्शनाय लोलुपाः दृश्यन्ते, तेषां पार्श्वे स्थातुमासनं प्राप्तुं च यतन्ते, आत्मानं च गौरवान्वितं मन्यन्ते। किं बहुना, तेषां राज्ञां दृष्टिप्रदानमात्रेणापि ते स्वजीवनं सफलं कर्तुं प्रभवन्ति। आस्तां तावद् राज्ञां दूरे चर्चा। साधारणधनिकानामपि दशा विचित्रा वर्तते। अर्थकल्यवर्ताः वन्दिनः तेषां यशो गायं गायं न कदाऽपि श्रान्तिं प्राप्नुवन्ति। निरक्षरभट्टाचार्या अपि ते विद्वांसः, बद्धमुष्टयोऽपि ते महादानशालिनः, धर्मपराङ्मुखाः अपि ते धर्मप्राणाः उच्यन्ते। किं बहुना, परदारलम्पटाः दुश्चारित्रा अपि ते सदाचारिणः, निर्मलवृत्ताः इति संज्ञाभिर्विज्ञाप्यन्ते।

अत्र को हेतुः ? किं कारणम् ? तेषां विपुलं धनमेव तेषां यशसां मूलकारणमस्ति। सत्यमेवोक्तं केनापि कविना यत्—

यस्यास्ति वित्तं स नरः कुलीनः,
स पण्डितः स श्रुतिमान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः,
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ १ ॥
धनैर्निष्कुलीनाः कुलीनाः भवन्ति
धनैरापदं मानवाः निस्तरन्ति।
धनेभ्यः परो बान्धवो नास्ति लोके
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ २ ॥

धनमेव मनुष्याणां यौवनसम्पादकम्। योऽधनवानस्ति स स्वधनकारणेन सुखेनौषधसेवनेन च वार्द्धक्येऽपि यौवनं प्राप्नोति, परन्तु येऽर्थहीनाः सन्ति, तेषां यौवनेऽपि वार्द्धक्यं विद्यते। यतस्ते न सुखेन स्वकालयापनं कर्तुं शक्नुवन्ति, न कदाऽपि स्वास्थ्यवर्द्धकं भोजनं प्राप्नुवन्ति; तेषां कृते दुग्धघृतयोरत्यन्ताभावो विद्यते।

गतवयसामपि पुंसां येषामर्थाः भवन्ति ते तरुणाः ।
अर्थेन तु ये हीनाः वृद्धास्ते यौवनेऽपि स्युः ॥

शीलेन, शौचेन, दाक्षिण्येन च समन्वितोऽपि पुरुषो यदा वित्त-विहीनो भवति, तदा शोभां न प्राप्नोति । तस्याभिमानः, दर्पः, विज्ञानं सर्वं प्रणश्यति, न कोऽपि तस्य गुणानामादरं करोति; सर्वे मनुष्यास्तं हेयदृष्ट्या पश्यन्ति । धनाभावाद् गुणानुरागिणो जनाः अपि, गुणान्वित-मपि तं गुणहीनं मन्यते । समाजे न तस्यादरः, न तस्य सत्कारः; न पूजा; प्रत्युत स जनैरपमानीक्रियते । एवं भूतस्य जनस्येयं दुर्दशा केनापि कविना सम्यगेव वर्णितं यत्—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥

मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥

नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥

गगनमिव नष्टतारं शुष्कं सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥

धनलोलुपाः मनुष्याः सुकुलं, कुशलम्, सज्जनम् परन्तु दरिद्रं जनं विहाय, कुलकुशलशीलविकले मनुष्ये सदा स्वानुरागं प्रकटयन्ति । यतस्तेषां धनस्य प्राप्तिस्तस्यैव सेवया प्राप्तुं शक्यते । सज्जनं न कोऽपि पृच्छति, यतः स दरिद्रः, परन्तु दुःशीलो दुश्चरित्रोऽपि धनवान् जनैः पूज्यते । उक्तञ्च—

सुकुलं, कुशलं, सुजनं, विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥

अतः सर्वैः सर्वदा धनस्य रक्षाऽवश्यमेव कर्तव्या । अर्थो हि सर्व-कार्यस्य प्रधानतमं साधनम् ।

अशनादिन्द्रियाणीव स्युः कार्याण्यखिलान्यपि ।
एतस्मात् कारणाद् वित्तं सर्वसाधनमुच्यते ॥

अर्थेणैव सर्वाः क्रियाः प्रवर्तन्ते । यथा उक्तञ्च—

अर्थेभ्योऽपि हि वृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
प्रवर्तन्ते क्रियाः सर्वाः पर्वतेभ्यः इवापगाः ॥



# ८. काशी-नगरी

अहो चित्रं वर्णनं काशीनगर्याः ! अस्या महिम्नो वर्णनं तु शेषेण, शारदया, व्यासमुनिना वा न कर्तुं शक्यते, किं पुनरस्मादृशैः प्राकृतैः जनैः। नगरीयं भगवत्याः भागीरथ्याः वामे पुलिने स्थिताऽद्यापि मन्दिराणां डिण्डमघोषव्याजेन स्वप्राचीनगौरवं महत्त्वञ्च तारस्वरेणोद्घोषयति। सहस्रैरुच्छ्रयद्भिर्ध्वजैः स्वसर्वोत्कृष्टां स्थितिं स्फुटीकरोति। नगरीयं भारते वर्षेऽस्मिन्नपि काले सर्वप्राचीना सर्वश्रेष्ठाऽस्तीति विषये नास्ति केषामपि वैमत्यम्। इयमेव नगरी महाभारतसमये वीर्यवता काशिराजेन राजधानीरूपेण समलंकृताऽऽसीत्। शाक्यवंशावतंसेन परमकारुणिकेन शाक्यमुनिना भगवता बुद्धेन अस्यामेव नगर्याम् 'अहिंसा परमो धर्मः' इति स्वाभिमतः सिद्धान्तः प्रतिपादितः। भारतभूमौ अद्वैतसिद्धान्तस्य प्रतिष्ठापकेन शङ्करस्यावतारभूतेन प्रतिभासमन्वितेन भगवता शंकराचार्येण स्वचरणारविन्दैरियमेव नगरी समलङ्कृता। भारतीयदर्शने शुद्धाद्वैततत्त्वं प्रतिपादयता कृष्णभक्तिमुपदिशता श्रीवल्लभाचार्येण नगर्यामस्यां चिरादुषितम्। भक्तिमार्गे सर्वजनानां समानाधिकारं स्वीकुर्वता आनन्दस्वरूपेण स्वामिना रामानन्देनेयमेव नगरी स्वोपदेशानां स्थली निर्मिता। भारतीयैकताया अनन्येन प्रचारकेण रामरहीमयोर्भेदं तिरस्कुर्वता, धर्मवीरेण, कबीरेणापि नगरीयं स्वजन्मस्थलीरूपेण समलङ्कृता। भारतीयजनानां हृदयं सूक्तिभिरानन्दार्णवे विनिमज्जयता, रामचरितमानसस्याऽमररचयित्रा, साधुजनानामकृतदासेन तुलसीदासेन अस्यामेव नगर्यां भक्तिपीयूषपूरितानां स्वग्रन्थानां रचना कृता। अधुनिक-हिन्दीगद्यस्य जन्म कुर्वता, हिन्दी—भाषाया गौरवं प्रतिपादयता, भारतेन्दुना हरिश्चन्द्रेणापि इयमेव नगरी हास्यरसपूर्णानां स्वनाटकानां रङ्गस्थली विनिर्मिता। किं बहुना, हिन्दूनां मानवर्धकेन, राजनीतिविशारदेन, हिन्दूविश्वविद्यालयस्य संस्थापनं कुर्वता 'महामना' इति पदवीविभूषितेन मदनमोहनमालवीयेनापि इयमेव नगरी स्वकर्मस्थलीरूपेण विभूषिता।

काश्याः महिमा सर्वोत्कर्षेण वर्तते। का कथा तस्याः नगर्याः महत्तायाः? यत्र स्वयं त्रिपुरारिर्भवान्या समन्वितो भगवान विश्वनाथः साक्षात् प्रतिवसति। यस्य दर्शनमात्रेणैव कलिकल्मषं दूरं भजति, कुत्सितो भावः पलायते, कामवासना भस्मावशेषा भवति, दरिद्रता दूरे तिष्ठति, धर्मविरतिश्च नश्यति। चित्रं वर्णनं तस्याः नगर्याः यत्र भगवान् भूतभावनो भैरवो जनानां रक्षणार्थं सदा बद्धपरिकरो धृतदण्डश्च विद्यते। केन शब्देन, कया वा रीत्या, कतमेन वा प्रकारेण तस्याः गौरवमुद्घोषयामः, यत्र भगवती भवानी अन्नपूर्णा स्वभक्तेभ्यो धनधान्यप्रदानेन सदा स्वनाम सार्थकं करोति। यत्र महिषासुरमर्दिनी भगवती दुर्गा अद्यापि दुष्टान् दण्डयितुं खड्गपाणी रक्तनेत्रा च दृश्यते। यत्र 'मङ्गलानाञ्च मङ्गलम्' तुन्दिलो गणेशो नगरवासिनां मङ्गलं विदधानो विद्यते। यत्र कलिकल्मषप्रक्षालनसमर्था भगवती भागीरथी अगणितजनानामुद्धारं कुर्वती, स्वर्गद्वारमुद्घाटयन्ती, वेगेन गच्छन्ती, प्रवहन्ती तिष्ठति। किं बहुना, या नगरी भुक्तिं मुक्तिञ्च प्रददाति, यत्र मरणमपि मङ्गलं मन्यते, यत्र पापानां प्रक्षालनं शीघ्रमेव भवति, यत्रत्याः जना अन्नपूर्णाप्रसादेन न कदाऽपि स्वोदरदरीपूरणस्य चिन्तामपि कुर्वन्ति, तस्याः महत्तायाः वर्णनं कर्तुं न कदाऽपि शक्नुमो वयम्।

हिन्दीभाषायाः सर्वश्रेष्ठेन महाकविना गोस्वामिना तुलसीदासेनाऽपि अस्याः महत्तायास्तारस्वरेण प्रशंसा कृता दृश्यते। यदुक्तं तेन महात्मना—

> भुक्ति मुक्ति महि जानि, ज्ञान खानि अघ हानि कर।
> जहं बस शम्भु भवानि, सो काशी सेइय कस न॥

तत्तु सुष्ठु समीचीनञ्च प्रतिभाति। अद्यापि सहस्रशः, किं वा कोटिशो जनाः काश्यां मरणं मङ्गलं मन्यन्ते। अनेके लब्धावकाशाः पुरुषाः काश्यामागत्य स्वमरणस्यावसरं प्रतीक्षन्ते। 'काश्यां मरणान्मुक्तिः' इति प्राचीनः आभाणकः सर्वथा सत्यं प्रतिभाति। अनेके मुमुक्षवो जनाः अद्यापि मुक्त्यर्थं काशीं सेवन्ते, काशीस्थ-विश्वनाथञ्च प्रार्थयन्ते, यन्मम निधनं काश्यामेव भवतु।

काश्यां सर्वप्रथमं यद् वस्तु जनानां नेत्राण्याकर्षति, तेषां हृदयानन्दञ्च विधत्ते, तत्तु भगवती भागीरथी गङ्गैव । इयं भगवती चिरकालात् काश्याः क्रोडे स्खलन्ती, खेलन्ती चाद्यापि तस्याः सम्पर्कमत्यजन्ती तिष्ठति । मन्ये, शिवशिरसि चिरकालवासपरिचयादद्यापि सा भगवता शम्भुनाधिष्ठिताया अस्या नगर्याः सहवासं त्यक्तुं नैव वाञ्छति । काश्यामुत्तरवाहिन्या गङ्गायाः शोभाऽतीव रमणीया दृश्यते । अस्या विशाले पुलिने स्थितानां मन्दिराणां प्रासादानाञ्च शोभा नेत्रानन्ददायिनी वर्तते। मन्दिराणामुपरि समुच्छ्रिता गगनचुम्बन्यः पताकाः काश्याः यशः स्वर्गभूमौ नेतुमुत्थितहस्ता इव ज्ञायन्ते । अस्याः पुलिने कुत्रचन संकीर्तनं भवति, कुत्रापि रामायणी कथा गीयते, कुत्रचिद् राजनैतिकं व्याख्यानं भवति, क्वचन युवकदम्पती स्वच्छन्दं विहरन्तौ संलापनिमग्नौ च दृश्येते। प्रातःकाले गङ्गातटे स्नानार्थिनां स्तोत्रैः, प्रार्थनाभिश्च कर्णकुहरं बधिरं संजायते ज्ञायते च कलिकल्मषभिया स्वपापक्षालनार्थं समस्तजगतीतलजना अत्रैव समागताः स्युः ।

काश्यां द्वितीयं दर्शनीयं स्थानं हिन्दूनां मानवर्धकः, भारतीयसभ्यतायाः संस्कृतेश्च प्रचारकः, प्राच्यप्रतीच्यसमस्तविद्यानामालयः, 'हिन्दू' शब्देन सुशोभितो विश्वविद्यालयोऽस्ति। अयं विश्वविद्यालयो महामनसो मनीषिणो मालवीयस्य मूर्तिमती कीर्तिर्विद्यते। यावत् कालं विश्वविद्यालयस्यास्य एकमपि पाषाणं सुरक्षितं विद्यते, तावत्कालं मालवीयस्य यशोराशिर्न कदाऽपि करालकालस्य कवलत्वं प्राप्तुं शक्नोति। अस्य गगनचुम्बिभिः शिखरैः स्वसंस्थापकस्य कीर्तिः स्वर्गं प्रापितेति मन्ये । अस्य पीतभवनानि त्यागस्योपदेशं वितरन्ति, अस्य विशालगृहाणि मनुष्येभ्यो विशालहृदयतामुपदिशन्ति। प्राचीन-गुरुकुलपरिपाटीप्रवर्तकोऽयं विश्वविद्यालयः कस्य श्रद्धायाः नाऽऽस्पदम्? यथाऽयं भारतीयसंस्कृतेः रक्षको विद्यते तथैव भारतीयसभ्यतायाः प्रचारकोऽप्यस्ति ।

अस्यामेव नगर्यां राजकीयादेशेन संस्थापितो राजकीयसंस्कृतमहाविद्यालयो विद्यते, यस्य प्रख्यातिः प्रचुराऽस्ति । अस्माकमाङ्गल-

शासकानां राज्येऽयमेव सर्वप्रथमो महाविद्यालयोऽस्ति यस्मिन् संस्कृत-भाषायाः शिक्षा प्रदीयते। प्राचीनोऽप्ययं विद्यालयोऽद्यापि नवीन इव देववाण्याः प्रचुरं प्रचारं करोति। अस्मिन्नेव विद्यालये महामहोपाध्यायाः शिवकुमारशास्त्रिणः सुधाकरबापूदेवगङ्गाधरादिप्रभृतयः शास्त्रि-महोदयाः अध्यापनकार्यमकुर्वन्। हर्षस्यायं विषये यदधुना उत्तरप्रदेशस्य भूतपूर्वेण मुख्यमन्त्रिणा श्रीमता सम्पूर्णानन्देन 'वाराणसेय संस्कृत विश्वविद्यालयस्य स्थापनाऽत्र कृता। प्राचीनराजकीय संस्कृत-महाविद्यालयोऽस्यैव विश्वविद्यालयस्य साम्प्रतं प्राधान्येनाङ्गीभूतेनाऽवतिष्ठते। साम्प्रतमस्य नाम 'सम्पूर्णानन्दविश्वविद्यालयः' इति उत्तर-प्रदेशसार्वकारैः कृतम्।

अत्रैव भारतमातुर्नूतनं निर्मितं मन्दिरमतीव नेत्रानन्ददायकं सुन्दरञ्चास्ति। मन्दिरेऽस्मिन् भारतमातुश्चित्रं भारतस्य मानचित्र-रूपेण विनिर्मितं विद्यते। स्वदेशभक्तानां देशप्रेमिणाञ्च कृते स्वनाम-धन्यस्य शिवप्रसादगुप्तस्यापूर्वेयं कृतिः सदैव तेषां श्रद्धायाः सम्मानस्य च पात्रमस्ति भविष्यति च। ये जननीं जन्मभूमिञ्च स्वर्गादपि गरीयसीं मन्यन्ते, तेषां कृते मन्दिरमिदं तीर्थस्थानात् कथमप्यूनं नास्ति।



## ६. गङ्गा-गौरवम्

अस्तीयं भगवती भागीरथी परमपूज्या पवित्रतमा चास्माकं दीव्या नदी। यथा पर्वतेषु हिमालयः, गोषु कामधेनुः, वृक्षेष्वश्वत्थस्तथैव सर्वासु नदीषु गङ्गा श्रेष्ठा, पवित्रतमा चास्ति। गङ्गाया महत्त्वप्रतिपादकानि अनेकानि स्तोत्राणि निर्मितानि सन्ति, येषु गङ्गाया महिमाऽत्यधिकः प्रदर्शितो विद्यते। गङ्गास्नानाद् दुरितक्षयो, भवति, मनुष्यो मुक्तिं च विन्दते। गङ्गाया जलेन सिक्तानि क्षेत्राणि प्रभूतशस्यमुत्पादयन्ति। अत एव गङ्गाऽस्मभ्यं भुक्तिं मुक्तिं च ददाति। केनापि कविना सम्यगेवोक्तं यत्—

नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम्।
भुक्तिञ्च मुक्तिञ्च ददासि नित्यं भावानुसारेण सदा नराणाम्॥

इयं भगवती गङ्गा 'भागीरथी' इति नाम्नाऽपि कथ्यते। श्रूयते हि पुरा यत् सगरो नाम अयोध्याधिपो राजाऽऽसीत्। तस्य षष्टिसहस्रसंख्यकाः पुत्रा आसन्, एकदाऽश्वमेधीयतुरङ्गमस्यान्वेषणतत्परा इमे पाताललोके कपिलस्याऽऽश्रमे स्थितमश्वं ददृशुः। निरपराधिनं कपिलमश्वचौरमिति मत्वा ते तस्यातिशयमपमानं चक्रुः। समाधिभङ्गात् क्रुद्धस्य कपिलस्य शापात् सर्वे ते भस्मसात् बभूवुः। सगरस्य वंशपम्परायां 'भगीरथः' नामा प्रतापी राजा बभूव। स स्वषष्टिसहस्रपितृभ्यो मुक्तिप्रदानार्थं परमं तपस्तेपे। अन्ततस्तेन राजर्षिणा गङ्गा स्वर्गादस्मिन् पृथ्वीतले समानीय स्वपितॄणामुद्धारः कृतः। यतो गङ्गा भगीरथेन राज्ञा स्वर्गात् पृथ्वीतलमानीताऽत एव तस्मात् कालात् सा भागीरथीति (भगीरथस्येयम्) लोकैरुच्यते।

इयं भगवती भागीरथी, हिमालये 'गङ्गोत्री' नामकस्थानाद् निर्गत्य दुर्गमं पाषाणं चूर्णयन्ती, प्रवहन्ती, स्खलन्ती, खेलन्ती, तारस्वरेण गर्जन्ती, गिरिगह्वरं पूरयन्ती, कलकलशब्दं कुर्वन्ती स्वदुग्धनिर्मलधाराभिर्नेत्रसुखं वितरन्ती, हरिद्वारमागत्य वेगेन वहन्ती गङ्गासागरं प्रवि-

शाति। अस्यास्तटे बहूनि समृद्धानि नगराणि सन्ति, येषु हरिद्वारः, प्रयागः, कर्णपुरम्, वाराणसी, पाटलिपुत्रं, कालिकाता च मुख्यरूपेण वर्तन्ते। हरिद्वारे काश्याञ्च गङ्गाया या शोभा वर्तते तस्या वर्णनं कर्तुं के खलु पारयन्ति? हरिद्वारे गङ्गाया जलमतीव स्वच्छमस्ति, ज्ञायते यत् पार्श्वे स्थिता पर्वता अपि तेषु निर्मलजलेषु प्रतिबिम्बव्याजेन स्वमुखं द्रष्टुं वाञ्छन्ति। सायंकाले आरात्रिकावसरे गङ्गायाः शोभा निरुपमा वर्तते। जलेषु प्रवहतां तैलपूरितप्रदीपानां शोभा न केनापि वर्णयितुं शक्यते। काश्यामपि गङ्गायाः शोभाऽतीव चित्ताकर्षका वर्तते। गङ्गायां स्वच्छपाषाणनिर्मितसोपानानां शोभा स्वर्गसोपानपंक्तिरिव दृश्यते। सन्ध्यासमये नौकासु भ्रमतां युवकयुवतीनां शोभाऽस्माकं वाग्व्यापारस्याविषयः। तत्र कुत्रचिद् व्यसनप्रिया जना विजयां (भङ्गम्) घोटयन्ति, कुत्रचन गानविद्याया अभ्यासः क्रियते, कुत्रचिद् हरिनामकीर्तनं भवति। सत्यमेव तस्मिन् समये जनानां चित्तमानन्दसागरे निमज्जति।

गङ्गायास्तटे कार्तिकपूर्णिमाया अवसरेऽनेकस्थानेषु जनानां बृहन्मेलनं भवति। तेषु गढमुक्तेश्वरः, राजघाटः, प्रयागः, भृगुराश्रमः (बलिया), सोनपुरं (विहार) प्रसिद्धानि सन्ति। अस्मिन् पर्वणि लक्षसंख्यका मनुष्यास्तत्र गत्वा, गङ्गायां स्नात्वा, आत्मानं विगतकल्मषं मन्यन्ते।

अनेके गङ्गायाः सन्ति लाभाः। गङ्गाया जलं निर्मलं निर्दोषञ्चास्ति। इदं चिरकालादपि न कदाऽपि विकारं प्राप्नोति। न केवलमेतद्देशीयैर्वैद्यैरस्या जलस्य मुक्तकण्ठेन प्रशंसा कृता; प्रत्युत पाश्चात्त्याऽऽयुर्वेदविद्याविशारदैरपि गङ्गाजलस्य वैज्ञानिकरीत्या परीक्षा कृताऽस्ति। तेऽपि सिद्धान्तमिममेव प्रतिपादयन्ति यद् गङ्गाजलं सुतरां शुद्धम्, निर्मलं निर्विकारञ्च विद्यते। देशान्तरगमने तत्परा आधुनिकपोता यात्रिणां पनार्थं गङ्गाजलं सञ्चित्य गच्छन्ति, यतस्तज्जलं चिरकालादपि कीटाणुभिर्न दूष्यते। गङ्गाया जलं स्वास्थ्यवर्धकञ्चास्ति। ये मनुष्या अजीर्णरोगेण पीडिताः सन्ति तेषां कृते तु इदमौषधरूपमेव। बहवो जना गङ्गायास्तटे स्वपर्णकुटीं निर्माय तस्या जलस्य सततपानेन स्वास्थ्यलाभं

कुर्वन्ति। गङ्गाजलपानेन जठराग्निस्तीव्रः संजायते इति तु मदीयोऽनुभवः। अत एव गङ्गाया जलस्य निर्दोषत्वे निर्मलत्वे च नास्ति कस्यापि संदेहलेशः।

गङ्गाजलेन क्षेत्राणां सेचनकार्यमपि भवति। हरिद्वाराद् गङ्गाया एका महती कुल्या (नहर) निष्कासिता वर्तते, यत् कर्णपुरं यावद् गच्छति। अस्या जलस्योपयोगेनानेका अनुर्वरा भूमयः शस्यसंपदा विभूषिताः संजाताः। यदि गङ्गायाः कुल्या न स्यात्तदानुर्वरक्षेत्राणि शस्यविरहितानि स्युः; तर्हि मनुष्याः परिपूर्णं भोजनार्थमपि न लभेरन्! येषु क्षेत्रेषु गङ्गायाः पूर आयाति तेषु धान्यराशिः प्रचुरो भवतीति प्रसिद्धमेव। अत एव गङ्गायाः कुल्ययाऽनेके लाभाः सन्ति। यदा गङ्गा न स्यात् तदा अस्मदीयस्य उत्तरप्रदेशस्य भूमिरनुर्वरा संजायेत।

यदा वाष्पेण संचालिता धूम्रगन्त्र्यः (रेलगाड़ी) नासन् तदोत्तरीयभारते गङ्गैव व्यापारस्य प्रधानतमं साधनमासीत्। वणिजः स्वपण्यानि नौषु स्थापयित्वा गङ्गायाः प्रवाहेण सह मुख्यानि नगराणि गत्वा स्ववस्तूनि विक्रीणन्ते स्म। तत्रत्यान् पदार्थान् क्रीत्वा स्वनगरमानयन्ति स्म। इत्थं व्यवहारविधौ नासीत् चौराणां भयम्, नापि पाटच्चराणामाशङ्का। स्वल्पमूल्येनैव वस्तूनि दूरस्थितेनापि जनेन आयासमन्तरा अनया विधया अलभ्यन्त। सत्यपि साम्प्रतं बहुव्यापारसाधनेऽद्यापि गंगायां नौभिर्व्यापारो भवत्येव, परन्तु वाष्पयान्त्रीबाहुल्येन स तु निश्चितमेव स्वल्पः संजातः। अतो गङ्गाऽस्माकं प्राचीनतमं सुरक्षितं व्यापारसाधनमासीद् अस्ति च।

आधुनिककाले गङ्गाजलस्यैको नवीन उपयोगः कृतः। अस्या जलेन विद्युत् समुत्पाद्यते या जलविद्युदथवा 'हाइड्रो एलेक्ट्रिसिटी' इति नाम्ना प्रसिद्धाऽस्ति। अनया विद्युताऽनेकेषु नगरेषु प्रकाशप्रदानस्य कार्यं क्रियते। यदि गङ्गाया जलविद्युत् न स्यात्तदा नगराणि इमानि सूचिभेद्ये तमसि निमग्नानि स्युः। अनेन प्रकारेण जलविद्युताऽस्माकं महानुपकारः क्रियते। अनयैव विद्युता अनेकानि व्यवसायगृहाणि (पुतलीघर) संचालितानि सन्ति, येषु वस्त्राणि, शाणानि, अन्ये

पदार्थाश्च निर्मीयन्ते। किं बहुना, अस्माकं भोजनस्य प्रधानपदार्थस्य गोधूमस्य पेषणमपि साम्प्रतं विद्युतैव क्रियते। यदि गङ्गाया जलविद्युद् न स्यात्तदाऽस्माकमिमानि सुखानि सुदुर्लभानि स्युः।

अस्मादेव कारणादस्माकं पूर्वजैर्गङ्गाया महती स्तुतिः कृता। गङ्गायाः प्रशंसायामनेकानि स्तोत्राणि निर्मितानि सन्ति, येषु भगवत्या भागीरथ्याः स्तुतिः रचिता वर्तते। श्रीमता भगवता शंकराचार्येण 'गङ्गाष्टकम्', पण्डितराजजगन्नाथेन रचिता च 'गङ्गालहरी' स्तोत्रेषु नितान्तमभिरामे विद्येते। अस्माकं शास्त्रेषु गङ्गास्नानस्य प्रचुरं माहात्म्यं वर्णितम्। किं बहुना, गङ्गानामोच्चारणेनापि पापानां प्रक्षालनं भवति किमुत स्नानेन। उक्तञ्च—

गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति॥

वृद्धावस्थायां गङ्गातटे निवासो मरणञ्चास्माकं भारतीयानामन्तिमाभिलाषा। उक्तञ्च शङ्कराचार्येण स्वगङ्गाष्टके—

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि—
स्वर्गारोहणवैजयन्ति! भवतीं भागीरथीं प्रार्थये।
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः॥

प्रातःकाले स्नानं कुर्वतामार्याणां मुखाद् गङ्गेव प्रथमः शब्द आयाति, यथा—"हर हर गङ्गा" इति, यथा तैः प्रतिदिनं प्रार्थना क्रियते—

"स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम्"

निखिलभारतीयनदीनां मध्ये गङ्गाया गणना तस्याः सर्वश्रेष्ठत्वेन सर्वप्रथमं क्रियते। यथा—

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥

पण्डितराजजगन्नाथेन गङ्गाजलम् 'सुधातः स्वादीयः' उक्तं यद्

तत्तु सत्यमेव। तस्य 'गङ्गालहरी' नामकप्रसिद्धस्तोत्रादेकं पद्यं उद्धृत्यात्रैव विरमाम इति शम्।

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि! तीरं श्रितवताम्।
सुधातः स्वादीयः सलिलभरमातृप्ति पिबतां
जनानामानन्दः परिहसति निर्वाणपदवीम् ॥



## ७. जननी

जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

सत्यमेव जननी स्वर्गादपि गरीयसी विद्यते। संसारेऽस्मिन् मातुरधिकं न किमपि वस्तु पूजनीयं वर्तते। मातैव श्रेष्ठानामपि श्रेष्ठा, पूज्यानां च पूज्यतमा। वेदेषु ब्राह्मणेषूपनिषत्सु च मातैव सर्वत्र गरीयसी प्रतिपादिताऽस्ति। आचार्याद्, जनकादपि माता श्रेष्ठाऽस्ति का कथा अन्येभ्यः। तैत्तिरीयोपनिषदि समावर्तनसंस्कारसमये यदा कुलपतिः शिष्यानुपदिशति, तदा तस्य सर्वप्रथमोऽयमेवोपदेशः 'मातृदेवो भव' इति। 'पितृदेवो भव' 'आचार्यदेवो भव' इत्युपदेशस्य विधानं तु पश्चादेव कृतं दृश्यते। अत एव मातृपितृगुरूणां मध्ये मातुः श्रेष्ठता विद्यते इति तु स्पष्टम्।

पिता पुत्राणां कृते नितान्तं गौरवास्पदं पदं धत्ते; गुरुरपि शिष्याणां परममाराधनपदभागिति विषये नास्ति कस्यापि सचेतसो विमतिः।

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः॥
यं मातापितरौ क्लेशं सहेते संभवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि॥

परन्तु पितुरपि माता सहस्राधिकेन गौरवेणातिरिच्यते इति भगवतो मनोः शास्त्रानुकूलं मतम्—

उपाध्यायाद् दशाचार्यः, आचार्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते॥

विश्वेऽस्मिन् सर्वे पदार्थाः सुलभाः प्रयत्नशीलस्य नरस्य। अलभ्योऽपि पदार्थः प्रयत्नबाहुल्येन लब्धुं पार्यते, परन्तु जननी, जन्मभूमिः, जनकश्चातीव दुर्लभाः। धनं विनाशं प्राप्य पुनरपि आगच्छति; स्त्रियः पुनर्विवाहेन लब्धुं शक्यन्ते; गतमपि यौवनं रसायनप्रयोगेण क्वचि-

प्रसादेन च प्राप्तुं शक्यते, परन्तु माता पिता जन्मभूमिश्च न केनापि कुत्रापि प्राप्यन्ते। पद्यरत्नमेतद् नितान्तं तथ्यम्—

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः।
जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः॥

कलत्राणि बान्धवाँश्च पदे पदे देशे देशे च यत्नशीलो नरो नियतं प्राप्तुं प्रभवति; परन्तु कुत्रास्ति स देशः, यत्र पुत्रवत्सला, सुतस्नेह-परायणा, साधुस्वभावा च माता बहुनापि मूल्येन, समधिकैरपि सहस्राधिकैः प्रयत्नैर्लब्धुं पार्यते ? पुत्रः कुपुत्रो भवतु नाम, परन्तु माता कदाऽपि कुमाता नैव भवति श्रीदेव्या अपराधसमापनस्तोत्रे यथा—

"कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।"

सुप्रसिद्धो मातृभक्तः श्रवणकुमारो नासीत् कोऽपि विद्वान्, नच प्रतिभा-सम्पन्नः पुरुषः, परन्तु स केवलं स्वमातृभक्त्या एव लोकेऽस्मिन्नमरत्वं प्राप्तवान्। निजावन्धौ, शक्तिहीनौ, पराक्रमरहितौ पितरौ वीवधे (बहँगी)-मध्ये स्थापयित्वा स्थानात् स्थानान्तरमुद्वहता तेन स्वीयं नाम जरामरण-रहितं कृतम्। यूरोपदेशे 'नेपोलियनः' नामकः एको महान् विजेता प्रादुरभवत्। महतस्तस्य कर्मयोगिनः कथनमिदमासीद् यत् 'मया स्वमातुरश्रुणो मूल्यं संसारस्य सर्वस्मादपि वस्तुनोऽधिकतरं मन्यते। अस्मिन्नर्थगर्भिते वचने पराक्रमशीलस्य तस्य प्रगाढा अनन्या च मातृभक्तिर्निहिता दृश्यते

आधुनिके काले गुरुदासवन्द्योपाध्यायनामको वङ्गदेशे लब्धकीर्ति-र्न्यायाधीश आसीत्, यः स्वमातुः परमो भक्तोऽभवत् श्रूयते यत् स मातुर्भोजनानन्तरमेव भोजनं करोति स्म। किं बहुना वङ्गदेशाद् दूरे-गतोऽपि स महानुभावः मातुर्भोजनस्य सूचनानन्तरमेव भोजनम-ग्रहीत्। स्वप्राणप्रियजनन्याः अनन्येन आज्ञाकारिणा तेन न कदाऽपि तस्या आज्ञा निरादृता मातुराज्ञानन्तरमेव झटिति तस्याः पालनम-करोत्। अनयैव मातृभक्त्या सांसारिक्याः स्वोन्नतेः शिखरमारुरोह स महानुभावः।

अद्वैतदर्शनसंस्थापकस्य शङ्करस्यावतारभूतस्य भगवतः श्रीशङ्कराचार्यस्य मातृभक्तेश्चर्चां विना नियतमेव लेखोऽयमपूर्णो भविष्यति। शङ्कराचार्यो यथाऽद्वैतदर्शनस्य प्रचारक आसीत् तथैव मातृभक्तोऽप्यासीदिति। श्रूयते यद् बाल्यादेव स उत्कटवैराग्यसम्पन्नः पुरुष आसीत्, तथा च संन्यासधर्मं ग्रहीतुमतीवोत्सुकोऽभूत्, परन्तु विषयेऽस्मिन् आवश्यकी तस्य मातुराज्ञा नासीत्। अत एव स संन्यासग्रहणाद् विरराम। यदा तेन मातुराज्ञा गृहीता तदैव स संन्यासधर्मस्य ग्रहणमकरोत् नान्यथा। यदा तस्य माता पञ्चत्वमगात् तदा संन्यासिनो धर्मविरुद्धमपि श्राद्धकार्यं तेन महात्मना सम्पादितम्। अहो! कीदृशी आसीत् तस्य अलौकिकी मातृभक्तिः। अहो! बालसंन्यासिना तेन मातुः कारणात् संन्यासधर्मस्य शैथिल्यमङ्गीकृत्यापि स्वमातृभक्तिप्रदर्शनस्यावसरो न त्यक्तः।

अत एव ज्ञायते यत् त्यक्तसंसारा वैराग्यसम्पन्ना अपि पुरुषा मातृभक्तिं श्रेष्ठां मन्यन्ते, किमुत संसारिणः। गृहमेधिनां परमं कर्तव्यमेतद् यन्मातृभक्तिशुश्रूषणं नाम। अतः सर्वैर्मनुष्यैर्मातृभक्तिरवश्यमेव विधेया।



## ८. जन्मभूमिः

जननीवद् जन्मभूमिरपि प्राणेभ्योऽपि प्रियतरा, तथा स्वर्गादपि गरीयसी विद्यते। यथा जननी अस्माकं जन्मनः कारणमस्ति, तथैव जन्मभूमिरपि धनधान्यप्रदानेनास्माकं पोषणं करोति। अस्माकं वेदेषु पुराणेषु धर्मशास्त्रेषु च जन्मभूमेरतीव महिमा प्रदर्शितो वर्तते। विष्णु-पुराणे लिखितमस्ति यद् देवा अपि भारतभूमिं प्रशंसन्तोऽस्यामेव जन्म प्राप्तुमिच्छन्ति। ते सर्वदा स्तुवन्ति यत् हे भगवन्! कदाऽस्माकं जन्म भारतभूमौ भविष्यति, येन वयं तत्रत्यं सुखं प्राप्स्यामः। ते भारतभूमिं स्वर्गादपवर्गाच्चाप्यधिकं मन्यन्ते। उक्तञ्च विष्णुपुराणे—

गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदभागभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥
जानीम नैतत् क्व वयं विलीने
स्वर्गप्रदे कर्मणि, देहबन्धम्।
प्राप्स्याम धन्याः खलु ते मनुष्या
ये भारते नेन्द्रियविप्रहीनाः॥

देवतानामेभिरुद्गारैः स्पष्टमेव ज्ञायते यत् ते स्वर्गादप्यधिकां भारत-भूमिं मन्यन्ते। ते स्वर्गभूमिमपि विहाय भारतभूमौ निवसितुमिच्छन्ति। भारतवर्षे जन्मग्रहणं ते सौभाग्यं मन्यन्ते। यद्देवा अपि भारतभूमौ जन्मग्रहणं सौभाग्यलक्षणं गणयन्ति, तर्हि का कथा प्राकृतानां जनानाम्?

भागवतेऽपि भारतवर्षस्य महिमा विशेषरूपेण वर्णितो विद्यते। तत्र लिखितमस्ति यद् देवा अपि भारतभुवं प्रशंसन्तः कथयन्ति यत्—

अहो भुवः सप्तसमुद्रवत्या
द्वीपेषु वर्षेष्वधिपुण्यमेतत्।
गायन्ति यत्रत्यजना मुरारेः
कर्माणि भद्राण्यवतारवन्ति॥

भागवते देवाः कथयन्ति यदेभिर्भारतवर्षीयैर्मनुष्यैः किं शोभनम-कारि यद् भगवान् तेषामुपरि स्वयं प्रसन्नो विद्यते। तेन भगवता भूयो भूयो दशावताररूपेण स्वीयं साकाररूपं भारताजिरे गृहीतम्। अस्माकं दुष्करैर्यज्ञैः, तपोव्रतैः, दानादिभिः क्षुद्रेण स्वर्गजयेन च को लाभः? यतः स्वर्गेऽतिशयेन्द्रियोत्सवाद् भगवतः पदपङ्कजस्य स्मृतिर्नैव विद्यते। परन्तु भारतभूमावस्यां भगवन्नामकीर्तनं सदैव भवति। अतोऽत्रैव निवासः श्रेयान्। देवतानां स्वर्गजयात् क्षणायुषां मनुष्याणां भारतभूजयो वरम्। यतो मरणानन्तरमत्रत्या मनुष्याः साक्षाद् भगवतो हरेरभयं पदं संयान्ति। यस्मिन् स्वर्गलोके भगवतः कथासुधापगा न प्रवहति, यत्र भक्तजनाः साधवश्च न सन्ति; यत्र महोत्सवा यज्ञेशमखा न वर्तन्ते, एवंभूतः सुरेशलोकः कथं सेव्यतामस्माभिरर्हति। उक्तञ्च—

> अहो अमीषां किमकारि शोभनं
> प्रसन्न एषां स्विदुत स्वयं हरिः।
> यैर्जन्म लब्धं नृषु भारताजिरे
> मुकुन्दसेवौपयिकं स्पृहा हि नः॥
> कल्पायुषां स्थानजयात् पुनर्भवात्
> क्षणायुषां भारतभूजयो वरम्।
> क्षणेन मर्त्येन कृतं मनस्विनः
> संन्यस्य संयान्त्यभयं पदं हरेः
> न यत्र वैकुण्ठकथा—सुधापगा
> न साधवो भागवतास्तदाश्रयाः।
> न यत्र यज्ञेशमखा महोत्सवाः
> सुरेशलोकोऽपि न वै स सेव्यताम्॥

किं बहुना, भारतवर्षीया जनाः पवित्रभूमिमिमां प्राप्य मोक्षायापि न स्पृहयन्ति, का कथा स्वर्गस्य। ते त्वस्यां भारतभूमौ पुनः पुनर्जन्म-ग्रहणमेव स्वसौभाग्यस्य परां काष्ठां स्वीकुर्वन्ति।

यस्मिन् पवित्रदेशे देवा अपि जन्मग्रहणं सौभाग्यमाकलयन्ति, तं देशं यदि तत्रत्या जनाः स्वर्गादपि श्रेयांसं मन्यन्ते, तर्हि काऽत्युक्तिः?

अस्माकं प्राचीनग्रन्थेषु न केवलं भारतवर्षस्य, परन्तु पवित्रदेशस्यास्य प्रत्येकनगरस्य महिमा सुविस्तृतरूपेण लिखितो विद्यते। काश्या मथुरायाश्च महिमा सुप्रसिद्धोऽस्ति। काश्या महात्म्यवर्णनं 'काशी-महिमा' प्रसङ्गे कृतमस्माभिः। मथुराया महिम्नो वर्णनमपि महत्त्वपूर्णं वर्तते। अथर्ववेदस्य गोपालतापिनीनामकोपनिषदि मथुराया महत्त्वं निम्नाङ्कितमस्ति।

मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा।
तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते॥

पद्मपुराणे साक्षाद् भगवतो वचनमिदं यद् दुराशया जना मदीयां सनातनीं पुरीं मथुरां न जानन्ति, या नगरी सुरेन्द्रनागेन्द्रमुनीन्द्रैः संस्तुता तथा मनोरमा चास्ति।

भागवते वृन्द्रावनस्य कीदृशं मनोरमम्, चित्ताकर्षकम्, महत्त्वप्रतिपादनं विद्यते? अत्रत्यास्तृणवीरुधः, द्रुमलताः, अद्रयः, खगमृगाः सर्वेऽपि धन्याः सन्ति।

धन्येयमद्य धरणी तृणवीरुधस्त्वत्-
पादस्पृशो द्रुमलताः करजाभिमृष्टाः।
नद्योऽद्रयः खगमृगाः सदयावलोकै-
र्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः॥

न केवलं नगराणामीदृशं महत्त्वं विद्यते, प्रत्युत पवित्रतमस्य देशस्यास्य भारतवर्षस्य प्रत्येकग्रामस्य, प्रत्येकनद्याः, प्रत्येकवाटिकायाः, प्रत्येकभूधरस्य, प्रत्येकसरोवरस्य, किं बहुना, प्रत्येकरजःकणस्यातीव महिमाऽस्ति। प्रातःकाले पतितपावन्यां भागीरथ्यां स्नानं कुर्वतां जनानां मुखादुच्चरितान् 'गङ्गा गङ्गेति यो ब्रूयात्' इति शब्दानिमान् श्रुत्वा कस्य भारतीयस्य हृदये स्वदेशस्य गौरवं न प्रादुर्भवति? यत्रत्या एका नदी केवलं नामस्मरणादेव सर्वपापान् क्षालयितुं क्षमा विद्यते; तत्र का कथा तस्य देशस्य गौरवस्य? कथं वर्णयामः तत्रत्यानां जनानां सौभाग्यम्? यदि ते स्वर्गमपि तिरस्कुर्वन्ति तत्र किमाश्चर्यम्।

मातृभूमेर्महिम्नो वर्णनं न केनापि कर्तुं शक्यते। क्षुद्राणां महतां च हृदये स्वमातृभूमेः प्रेम समानरूपेण वर्तते। यदा मातृभूमेरेकोऽपि रज-कणो जनानां हृदये आनन्दोर्मिं समुत्पादयितुं समर्थो भवति, तदा का कथा तत्रत्यानां नदीनदतडागपर्वतानाम्? लङ्कायां रावणवधं कृत्वा, सीताया उद्धारं सम्पाद्य, चतुर्दशवर्षाणि वनमुषित्वा स्वजन्मभूमिं प्रत्यागच्छन् गम्भीरप्रकृतिरपि रामचन्द्रः—यस्य गम्भीरतायाः सुखदुःखसहन-शीलतायाश्च विषये गोस्वामिना महात्मना तुलसीदासेन स्पष्टमेवोक्तम्—'प्रसन्नतां यो न गतोऽभिषेकतस्तथा न मम्लौ वनवासदुःखतः'—स्व-मातृभूमेरयोध्यायाः पादप्रक्षालनं कुर्वती सरयूमवलोक्य स्वकीये विश-लेऽपि हृदये तस्या दर्शनजातमानन्दपूरं निरोद्धुं न शशाक। तस्य पूर्वाः स्मृतयो जागरिताः सञ्जाताः। स कथयितुमारेभे यदियं सरयूरुत्तर-कोशलानां सामान्यधात्रीव मे मानसं संभावयति। मान्येन राज्ञा दशरथेन विमुक्तेयं मदीया जननीव दूरे वसन्तम्, प्रवासादागच्छन्तं मां स्वशिशिरानिलैस्तरङ्गहस्तैरालिङ्गतीव।

जलानि या तीरनिखातयूपानि वहत्ययोध्यामनुराजधानीम्।<br>
तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि॥<br>
यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम्।<br>
सामान्यधात्रीमिव मानसं मे संभावयत्युत्तरकोशलानाम्॥<br>
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता।<br>
दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव॥

अहो कीदृशी प्रागाढा स्वमातृभूमिभक्तिर्दृश्यते रामचन्द्रस्य। अयो-ध्यातटवाहिनी सरयूः 'मदीया जननीव' कथिता तेन भगवता! अतः परं किमधिकं गौरवं भविष्यति मातृभूमेर्भारतभूमेः।

न केवलं भारते वर्षे प्रत्युतान्यदेशेष्वपि मातृभूमेर्महत्त्वं विशेषरूपेण वर्तते। यूरोपदेशीया जनाः स्वजन्मभूमिभक्तिकारणात् प्रसिद्धाः सन्ति। जर्मनदेशीया मनुष्याः 'जर्ममी' इत्याख्यां स्वमातृभूमिं पितृभूमिं कथ-यन्ति। यथा वयं स्वदेशे गंगायाः समादरं कुर्मः, तथैव तेऽपि 'राइन' इति नाम्ना प्रसिद्धां नदीं महता गौरवेण पश्यन्ति। आङ्गलदेशीया अपि

जना स्वजन्मभूमेर्भक्ता भवन्ति । तेषां कृते स्वजन्मभूमेरधिकं प्रियतरं न किमपि स्थानं संसारेऽस्मिन् वर्तते । ते स्वमातृभूमेर्गौरवस्य गानं गायं गायं न कदापि सन्तुष्टा भवन्ति, ते तु स्वकीयमतीव स्वल्पमपि देशम् 'महान् ब्रिटेन' इति नाम्ना प्रसिद्धं कुर्वन्ति । ते स्वजन्मभूमेः प्रगाढ्या भक्त्या सर्वथा मधुरं गीतं गायन्ति ।

इयं मातृभूमिभक्तिर्न केवलं मनुष्येषु, प्रत्युतान्येषु प्राणिष्वपि दृश्यते । श्रूयते हि पुरा यत्कोऽपि शुक आसीत् । स दैवदुर्विपाकात् पञ्जरतामवाप । तस्मिन् पञ्जरमये कारागारे बहूनि वर्षाणि व्यतीतानि कृत्वा स एकदाऽन्यं कमपि स्वतन्त्रं शुकं ददर्श । 'कुत्रत्यो भवान्' इति पञ्जरस्थेन शुकेन पृष्टः स तस्य देशस्य नामग्रहणमकरोद् यत्रत्योऽपरः शुक आसीत् । स पराधीनः शुकः स्वमातृभूमेर्नाम श्रवणातिथिं विधाय झटिति तत्रैव पञ्चत्वमगात् । अहो प्रगाढा जन्मभूमिप्रीतिस्तस्य शुकहतकस्य । प्रशंसनीयं तस्य देशप्रेम ।

भारतवर्षे प्राचीनसमये बहवः ईदृशा मनुष्या आसन् यैः स्वमातृभूमिकृते जीवितमपि परित्यक्तम् । अधुनाऽपि बहवो देशभक्ताः सन्ति ये जन्मभूमिरक्षार्थं स्वजीवनं धनं समस्तमपि राज्यं स्वल्पं गणयन्ति । प्राचीनकाले चन्द्रगुप्तमौर्यो भारतवर्षस्य सर्वप्रथमः सम्राड् बभूव, येन वीरशिरोमणिना देशादस्माद् ग्रीकदेशीयान् जनान् पराजित्य पवित्रदेशस्यास्य स्वतन्त्रता रक्षिता । गुप्तवंशीयेन परमप्रतापिना राज्ञा स्कन्दगुप्तेन परमपतितैर्हूणैः सह महान्तं समरं विधाय मातृभूमिरियं स्वतन्त्रा कृता । अस्यैव समरस्य वर्णनं कुर्वन् कोऽपि कविः कथयति यत् "हूणैर्यस्य समागतस्य समरे दोर्भ्यां धरा कम्पिता" तथा "क्षितितलशयनीये येन नीता त्रियामा" इति । स्वनामधन्येन वीराग्रणिना महाराणाप्रतापेन वने वने विचरता, शुष्कं तृणमपि खादता, अनेकशतसहस्रदुःखमनुभवता यत् पराजयो न स्वीकृतस्तत्किं निजसुखार्थम् ? नहि नहि केवलं मातृभूमेः स्वतन्त्रताया रक्षणायैव । महाराष्ट्रराज्यसंस्थापकश्छत्रपतिशिवाजी-महाराजो यन्मुगलाधीशेन सह बहुवर्षाणि निरन्तरं युद्धमकरोत् तत्किं निजस्वार्थसिद्ध्यर्थम् ? नहि नहि केवलं स्वमातृभूमि-

रक्षार्थमेव। अधुनाऽपि यल्लोकमान्यतिलकः, महात्मागान्धिप्रभृतयो देशभक्ता नितान्तं कष्टमनुभवन्तोऽपि स्वकार्याद् विमनस्का न भवन्ति तदपि केवलं जन्मभूमिप्रेम्णैव, न तु स्वार्थधिया। अमी देशभक्ताः स्वधनम्, स्वजनम्, स्वकुलम्, स्वजीवनमपि परित्यक्तुमिच्छन्ति, परन्तु न कदाऽपि देशभक्तिम्, यतस्तेषां कृते मातृभूमिः स्वर्गादपि गरीयसी विद्यते। ते तु मातृभूमिसेवार्थं मरणानन्तरमपि अत्रैव जन्मग्रहणमिच्छन्ति, परन्तु न कदाऽपि स्वर्गाय स्पृहयन्ति। अहो तेषां जन्मभूमिभक्तेः पराकाष्ठा!

यथाऽस्माकं जननी स्वपुत्राणां जन्मनः कारणं भवति, जन्मानन्तरं पालनेन पोषणेन च तान् संवर्धयति; सर्वदा तेषां पुत्राणामुपकारं करोति, नापकारम्; यदि पुत्रः कमप्यपराधं करोति, तथापि क्षमामेव प्रददाति, तथैव जन्मभूमिरपि स्वाऽतुलेऽङ्के अस्मान् धारयति। धनधान्यप्रदानेनास्माकं सरीरस्य पालनं करोति। यदा वयं गमनेऽप्यसमर्थाः स्याम तदासाऽवलम्बनं ददाति। प्राप्तायां युवावस्थायाम्, मातृभूमिरस्मभ्यं गगनचुम्बिप्रासादात् सुखेन निवसितुं वितरति। वयमनेकानपराधान् कुर्मः, परन्तु जन्मभूमिर्न कदाऽपि अस्मभ्यं कुप्यति। देशद्रोहिणोऽपि पुरुषान् जन्मभूमिः शरणागतान् करोति। स्वकर्मानुसारेण नियतं कालं सुखं कृत्वा सर्वेऽपि पुरुषाः स्वर्गाद् निष्काश्यन्ते, परन्तु अनन्तकालं सुखमनुभूयमानेऽपि जन्मभूमिर्न कस्यापि निष्काशनं करोति। मातृभूमौ बन्धुबान्धवैः परिवृते गृहे, पितृभ्यां पोषिते शरीरे यत्सुखं विद्यते, तस्य दर्शनमपि स्वर्गे कुत्रास्ति? स्वर्गेऽतिशयेन्द्रियोत्सवाद् मनुष्या विष्णोः पवित्रं नामस्मरणं विस्मरन्ति, परन्तु मातृभूमौ तद्विस्मरणस्य न कुत्रापि संभावना वर्तते। पुण्यरहितानां जनानां स्वर्गे नाधिकारः, परन्तु जन्मभूमौ सर्वेषां तुल्योऽधिकारो विद्यते। स्वदेशे जन्मग्रहणात् स्वाभाविकं प्रेमाऽऽविर्भवति, परन्तु न तथा स्वर्गे। अस्मान् विषमापद्भ्यो जननी जन्मभूमिश्चर क्षतः। एभिरेव कारणैः "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" यत् सुप्रसिद्धं सुभाषितं विद्यते, तदतीव समीचीनं सत्यञ्च प्रतिभाति।

# ९. त्याज्यं न धैर्यं विधुरेऽपि काले

संसारेऽस्मिन् जनानामुपकारका लोकरक्षणहेतवश्च ये गुणाः सन्ति तेषु धैर्यमतीवोपकारकं लाभप्रदञ्चास्ति। यदि संसारे धैर्यं न स्यात्तदा जनानां जीवनमतीव दुःखमयं भवेत्। संसारिणः सर्वेऽपि जनाः धैर्येण विना निरवलम्बा भवेयुः। अतिनिर्धना जनाः धैर्यमवलम्ब्यैव जीवन्ति। कण्ठगतप्राणा रोगिणो धैर्यस्याश्रयेण जीवनं धारयन्ति। किं बहुना, दुःखग्राहशतसंकुलेऽपारसंसारसमुद्रे भाविनः सुखस्याशया धैर्यं धारयित्वा प्राकृता जनाः स्वजीवननौकां चालयन्ति।

भगवता श्रीकृष्णेन गीतायां द्वे सम्पदौ प्रतिपादिते; प्रथमा दैवी द्वितीया चासुरी। तत्र धैर्यस्य गणना दैवीसम्पन्मध्ये कृताऽस्ति—

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत॥

उभयोरन्तरं प्रतिपादयता भगवता श्रीकृष्णेन स्पष्टमेवोक्तं यद् दैवीसम्पद् जनानां विमोक्षाय प्रभवति, तथाऽऽसुरीःसम्पद् निबन्धाय विद्यते—

"दैवी सम्पद्विमोक्षाय निबन्धायासुरीःमता।"

अत एव स्पष्टमिदं यद् ये जना धृतिं धारयन्ति तेषामवश्यमेव दुःखाद् मोक्षो भवति। 'दशकं धर्मलक्षणम्' उपदिशता मुनिना मनुनाऽपि धैर्यं धर्मलक्षणे परिगणितम्। उक्तं हि तेन—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

अतो धैर्यस्याऽऽवश्यकताऽस्माकं शास्त्रेषु स्वीकृता, तथाऽस्य पालनमवश्यं कर्तव्यमिति स्पष्टमुपदिष्टम्।

महाभारतेऽपि भीष्मेण स्पष्टमेव कथितं यत् पुत्रैर्भार्यया च वियुक्तस्य, धनेन रहितस्य, विपत्समुद्रे मग्नस्य पुरुषस्यापि कृते धैर्यस्यावलम्बनं

श्रेयस्करं भवति। यस्तस्मिन् कठिनसमये धैर्यमेव मुख्यतम आश्रयः। आपत्काले धैर्येण विना क्षणमपि जीवितुं न शक्यते। यथोक्तं भीष्म-पितामहेन—

पुत्रदारैर्वियुक्तस्य वियुक्तस्य धनेन वा।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप॥

यथा सन्तोषस्य फलं मधुरं भवति, तथैव धैर्यस्यापि फलं मधुरं भवति। कृच्छ्रेऽपि व्यसने निमग्ना अनेके प्राणिनो धैर्यमवलम्ब्यैव स्वजीवनरक्षां चक्रुः। लङ्कायामशोकवाटिकायां दुराचारिणा रावणेन स्थापिता सीता धैर्यस्यावलम्बनं कृत्वैव स्वशरीरत्यागाद् विरराम।

"चन्द्रहास हर मे परितापं रामचन्द्रविरहानलजातम्"

इति वदन्त्याः सीताया रामचन्द्रस्य वियोगाज्जातो विरहाग्निर्धैर्यज-लेनैव प्रशशाम। यदा सीता रामचन्द्रस्य दर्शनस्याशां त्यक्त्वा, धैर्य-मुज्झित्वा, स्वशरीरमग्निसात्कर्तुमुद्यताऽऽसीत, तस्मिन्नेव काले वायुपुत्रो हनूमान् तामाश्वासयति स्म यत हे देवि! अधीरा मा भव, धैर्यं मा परित्यज, स्वशरीरं न दहेः, पुनरपि त्वं राममुखाम्बुजस्य दर्शनं करिष्यसि, अस्य दुःखस्यानन्तरं त्वं सुखमवश्यमेव प्राप्स्यसि। अतो धैर्यमवलम्ब्य देहरक्षा विधेया। सीतां प्रबोधयन् स कथयति यत्—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम्।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥ इति।

महाभारते धर्मराजेन युधिष्ठिरेण धैर्यमाश्रित्यैव महान् युद्धो जितः। द्रौपद्याः केशाकर्षणसमये तदनुजा योद्धुमुद्यता अपि श्रेष्ठेनानुजेन निवारिता आसन्। स्वाभार्याया अपमानं पश्यन्नपि युधिष्ठिरो धैर्याद् न विचचाल। अज्ञातवासे विराटनगरे महद् दुःखमनुभवन्नपि, नीचं कर्म कुर्वन्नपि न कदाऽपि धैर्यं तत्याज। धैर्येण शान्त्या च स्वपक्षं परिपोषयता तेनाधीरप्रकृतयः कौरवाः पराजिता इति सुविदितमेव सर्वेषाम्।

भर्तुः शापाद् यक्षेण वियुक्ता विरहिणी यक्षपत्नी यद् दीर्घान्, कठिनान्, द्वादशमासान् व्यतीतवती तत्किं वीरतया, पराक्रमेण वा ? अत्र धैर्यमेव प्रधानो हेतुः। यदि तस्याः सुकुमारहृदये यक्षसमागम-रूपधैर्यस्यावलम्बनं न स्यात्तदा तद् हृदयं शतधा विदीर्णं भवेत्। शेषान्मासान् गमय चतुरो लोचने मीलयित्वा' इति सन्दिशता यक्षेण धैर्यस्योपदेशः कृतः। यथा—

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् ।
सद्यः पाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥

तथैव धैर्यमपि विप्रयुक्तानां प्राणिनां हृदयं नाशाद् रक्षति। प्राण-वल्लभाद् विप्रयुक्ताऽपि यत् कान्ता प्राणान् धारयति, तत्तु धैर्य-स्यावलम्बनेनैव करोति। शशिना वियुक्ता शर्वरी, रात्रौ चक्रवाकेन विरहिता चक्रवाकी, दिवा चन्द्रेण विप्रयुक्ता कुमुदिनी यद् विरहे जीवितं धारयितुं शक्नुवन्ति, स तु धैर्यस्यैव प्रभावः।

सुविदितमेवैतद् भारतीयेतिवृत्तप्रियाणां पाठकानां यन्महामहिम-शाली, क्षत्रियकुलभूषणः, रवेरिव प्रतापवान् महाराणाप्रतापो वने वने विचरन्नपि, समधिकं क्लेशं वहन्नपि, शुष्कतृणस्य रोटिकां खादन्नपि, शिलातले स्वपन्नपि, निकृष्टां कष्टां दशामनुभवन्नपि, स्वपरिवारं क्षुत्क्षामकण्ठं पश्यन्नपि, न कदाऽपि धैर्यं तत्याज। न कदाऽपि यवनराजस्याधीनतां स्वीकृतवान्, न कदाऽपि यवनराजस्य धनलोभ-मङ्गीकृतवान्। धैर्यं धारयता तेन वीरशिरोमणिना स्वराज्यं पुनरपि र्जितम्।

कादम्बर्यां महाश्वेताविरहकातरम् विलपन्तम्, व्याकुलम्, कण्ठगतप्राणं पुण्डरीकं बोधयता कपिञ्जलेन "धैर्यधना हि साधवः" इति श्रेयस्करोपदेशः कृतः। तेन महात्मनाऽऽपत्कालेऽपि धैर्याव-लम्बनस्य महत्त्वं स्पष्टमुपदिष्टम्। विपत्तिकाले यदि धैर्यस्याश्रयो न स्यात् तर्हि मनुष्यो निश्चितमेवागाधविपत्त्योधौ विनिमज्जेत्। अत एव कठिनां दशामापन्नेनापि धैर्यं न त्याज्यम्। धैर्य-धारणेन मनुष्यः

कदाचित् स्वदुःखस्य नाशं कर्तुं प्रभवति। नाविका अपारसमुद्रम पोतभङ्गेऽपि धैर्यं धारयित्वा तर्तुमिच्छन्ति, केचिच्च पारमपि गच्छन्ति सम्यगुक्तं केनापि कविना यत्

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात् कदाचिद् गतिमाप्नुयात् सः।
यथा समुद्रेऽपि हि पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥

केचन पुरुषाः धैर्यमधारयित्वा शीघ्रमेवाधीरा भवन्ति। झटि क्रोधयुक्तास्तेऽनर्थं कुर्वन्ति। आपत्काले तेषां दशाऽतीव विष सञ्जायते। धैर्यविरहितास्ते अल्पेनैव दुःखेन व्याकुला भवन्ति विपत्समुद्रे च निमज्जन्ति। ते दुःखनाशस्योपायमविचारयन्तः सह आत्मघातमपि कुर्वन्ति। अनेनाविवेकरूपेणाऽधैर्येण मनुष्यः स्वजीव मतिशयं दुःखमयं करोति। भारविणा समुचितमेवोपदिष्टं यत्—

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥

तथा च—

अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः।

अत एव सर्वास्ववस्थासु कालेषु च सर्वेषु धैर्यमवलम्ब्यैव का करणीयम्, न कदाऽपि सहसा क्रियां विदधीत; न कदाऽपि विस्मर्त कपिञ्जलस्योपदेशो यत् "धैर्यधना हि साधवः" इति।

## १०. उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः

शास्त्रकारैर्द्वे वस्तुनी महत्त्वपूर्णे प्रतिपादिते, प्रथमं दैवं द्वितीयञ्च
रुषार्थः। अनयोर्मध्ये कः श्रेयानिति विषयेऽस्मिन् नास्त्यैकमत्यं
रस्परं विवदमानानां शास्त्राणां पुरुषाणाञ्च। कश्चिद् दैवं महत्त्वपूर्णं
न्यते, अन्यः पुरुषार्थमेव कल्याणकारकं वदति। कश्चिद् दैवमवलम्ब्य
निष्क्रियो भूत्वा स्वकालं नयति, अपरः पुरुषार्थं सम्पादयन् कार्याणि
ाधयति। कश्चिद् भाग्यम्, भाग्यमिति वदन् स्वोदरदरीपूरणायापि
चिन्तां न करोति, अन्यः पुरुषकारमुररीकृत्य कार्यं सदा करोति। अस्माकं
थनस्यायमाशयो यत् संसारेऽस्मिन् द्विविधा जनाः सन्ति—दैव-
रायणाः पुरुषार्थपरायणाश्च। भगवान् सर्वेषां जनानां त्राता दाता च
द्यते। अतस्तैर्दैववादिभिरुपदिश्यते यन्न कदाऽपि कर्म करणीयम्।
ाषाकवेर्मलूकदासस्येदं पद्यं तेषां महामन्त्र इव विद्यते यत्—

> अजगर करै न चाकरी, पंछी करै न काम।
> दास मलूका कह गयो, सबके दाता राम॥

पुरुषार्थिनो जनाः स्वभुजयोरेव बलेन दैवं निराहृत्य साध्नुवन्ति
मस्तानि कार्यजातानि। 'उद्यमः' तेषां परमः सहायकः, भुजौ च परमं
ाधनम्। इत्थं स्पष्टमेव ज्ञायते यद् दैवपारायणानां पुरुषार्थिनां च
ध्ये महदन्तरं विद्यते।

अनयोर्दैवपुरुषकारयोर्मध्ये कः श्रेयानीति निर्णयं कर्तुमतीव
ुष्करम्। महाभारते शान्तिपर्वणि पितामहेन भीष्मेण विषयस्यास्य
हद्विवेचनं कृतम्। तेन तु दैवस्य पुरुषकारस्य च समानं महत्त्वं
तिपादितम्। यथा बीजेन विना क्षेत्रं निरर्थकं निष्फलं च भवति, तथैव
ुरुषकारेण विना दैवं न कदापि सिध्यति—

> यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम्।
> तथा पुरुषकारेण विना दैवं न सिध्यति॥

अस्माकं शास्त्रकारैः पुरुषकारस्तु क्षेत्रं कथितम, दैवं बीजमु
मस्ति। यथा क्षेत्रबीजसमायोगात् शस्यं भवति, तथैव दैवपुरुषकार
सहयोगात् कार्यस्य सिद्धिर्जायते।

क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम्।
क्षेत्रबीजसमायोगात्ततः शस्यं समृध्यते॥
नाबीजं जायते किञ्चिन्न बीजेन विना फलम्।
बीजाद् बीजं प्रभवति बीजादेव फलं स्मृतम्॥

शकटस्य संचरणाय द्वयोश्चक्रयोरावश्यकता वर्तते। यत ए
चक्रेण न कदाऽपि, कथमपि गन्त्री गन्तुं प्रभवति तथैव कस्यापि कार्य
सिद्धौ दैवस्य पुरुषकारस्य च द्वयोरपि समानावश्यकता विद्यते; य
केवलेन दैवेन कार्यस्य सिद्धिर्न भवति, तथैव केवलेन पुरुषकारेण
कस्यापि कार्यस्य सफलता न जायते। तथोक्तं समुचितमेव केना
कविना यत्—

यथाग्निः पवनोद्धूतः सुसूक्ष्मोऽपि महान् भवेत्।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते॥

अत एव निश्चितमिदं यत् कार्यसिद्धौ दैवपुरुषकारयोः सम
महत्त्वमस्ति।

वस्तुतस्तु दैवपुरुषकारयोर्मध्ये पुरुषकारस्यैव प्राधान्यं दृश्यते। संस
ऽस्मिन् यानि महत्त्वपूर्णानि कार्याणि संजातानि तानि सर्वाणि पुरु
कारेणैव, न तु कदापि दैवेन। पुरुषार्थ एव कर्तव्यपरायणानां जना
महामन्त्र आसीदस्ति च ' उद्योगिनं पुरुषमेव लक्ष्मीर्गच्छति, न
दैवपरायणं जनम्। ये तु 'दैवं दैवम्' इति रटन्तो भाग्यमवलम्
तिष्ठन्तः कर्मपराङ्मुखा भवन्ति; ते संसारे कापुरुषाः कथ्यन्ते, तथा
किमपि सारभूतं कार्यं तैः कर्तुं शक्यते। केनापि कविना समुचि
मेवोक्तं यत्—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषाः वदन्ति।

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥

यदि संसारे पुरुषार्थो न स्यात् तदा सर्वे जना भाग्यं भाग्यं जल्पन्तः आलस्यपयोधौ निमग्नाः स्युः ; न कोऽपि किमपि कार्यं कर्तुं प्रभवेत् । समस्तोऽयं समाजो निष्क्रियो निरर्थकश्च भवेत् । संसारस्य लोकयात्रा-सरणिं न कोऽपि गच्छेत् । निष्क्रियत्वात् सर्वञ्च राष्ट्रं रसातलं व्रजेत् । अत एव गीतायाम्—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥

इत्यर्जुनमुपदिशता भगवता श्रीकृष्णेन स्पष्टमेव प्रतिपादिता कर्मणः परमाऽऽवश्यकता । ये तु सिद्धाः, वीतरागाः, निस्पृहाः सन्तस्तेषामपि कृते कर्मकरणीयमावश्यकम् । का कथा पुनरितरेषां प्राकृतजनानाम् ।

महाराजस्य भगीरथस्य स्वलोकोत्तप्रयत्नस्य, अद्वितीयकर्मणा-श्चैवेदं फलं यत् कलिकल्मषक्षालनसमर्था भगवती भागीरथी स्वर्गात् पृथ्वीतलमानीता अद्यापि च पापान् क्षालयन्ती, सुधासदृशं जलं पाय-यन्ती, मुक्तिञ्च ददती, प्रवहन्ती तिष्ठति । मर्यादापुरुषोत्तमेन रामचन्द्रे-णापि स्वभुजबलैरेव; अतुलकर्मणैव रावणेन दुरात्मना लंकामानीताऽ-शोकवाटिकायां स्थापिता सशोका सीताऽशोका कृता । क्रूरैः, नीति-कुटिलैः, धार्तराष्ट्रैर्हृतं राज्यं वीरशिरोमणिभ्यां भीमेनार्जुनेन च उद्यममवलम्ब्यैव जितमभूत्—

पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद् भुजसंश्रयात् ॥

किं बहुनाऽस्मिन्नपि विषमे काले स्वनामधन्येन 'महामना' इति पदवीविभूषितेन मालवीयेन हिन्दूनां मानवर्धकः, भारतीयसभ्यतायाः संस्कृतेश्च प्रचारकः, यो महान् विशालश्च हिन्दूविश्वविद्यालयः काश्यां स्थापितः सोऽपि स्वाद्वितीयेन पुरुषार्थेनैव कृतः, न कदाऽपि दैवेन ।

वास्तविकेनैव मोदकेन मिष्टा भावतुमहो मानवानां जिह्वा, न तु काल्पनिकेन मनोमोदकेन। केवलेन मनोरथेन न कोऽपि पुरुषः कामपि सिद्धिमाप्तुं प्रभवति न कमपि देशं गन्तुं समर्थः; एतत्कृते तूद्यमः परमावश्यकः।

इत्थं सर्वाण्यपि कार्याणि पुरुषार्थेणोद्यमेन च सिध्यन्ति, न कदाऽपि भाग्येन मनोरथेन वा। न कोऽपि जीवः सुप्तस्य सिंहस्य मुखे स्वयमेव प्रविशति, प्रत्युत यदा सिंहः पुरुषार्थं करोति तदैव स्वभोजनं लभते। यथोक्तम्—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

अत एवास्माभिरपि सर्वदा सर्वथा च दैवं परित्यज्य पुरुषार्थ एव सम्पादनीयः, यतः "दैवं दैवमिति कापुरुषा वदन्ति।"



## ११. नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण

क्षणभङ्गुरेऽस्मिन् जगति न किमपि वस्तु चिरस्थायि वर्तते। ंसरतीति संसारः, गच्छतीति जगदिति व्युत्पत्तया स्पष्टमेव ज्ञायते ादत्र न किमपि वस्तु परिवर्तनरहितमस्ति। यदा संसारः संसरण- ीलो वर्तते, तदा का कथाऽत्रत्यानां वस्तूनां जनानां वा ? अस्मिन् ागति यानि वस्तूनि दृश्यन्ते तेषां विनाशः पुनर्जन्म च निश्चितमेव। ात एव भगवता श्रीकृष्णेन गीतायां स्पष्टमुपदिष्टम्—"जातस्य हि ध्रुवो ृत्युर्ध्रुवं जन्म मृतस्य च"। परिवर्तनशीलेऽस्मिन् संसारे कस्यापि ास्तुन एकैव दशा न सर्वदा भवति। यथा मनुष्यो जन्म प्राप्य शिशु- ामतिक्रम्य युवावस्थां प्राप्नोति, अन्ते च वृद्धावस्थां लब्ध्वा स्वजीवनं ारित्यजति, तथैव सर्वाणि वस्तून्यपि कदाऽपि सुखदां कदाऽपि विषमां ़शामनुभवन्ति। परिवर्तनशीलतेयं न केवलं प्राणिषु, प्रत्युताप्राणिष्वपि ़श्यते। प्रभातकाले विकसितं सुगन्धपरिपूरितं कुसुमं सन्ध्याकाले ांकोचं प्राप्नोति, रात्रौ जनानामाह्लादजननी कुमुदिनी प्रभाते श्रीहीना ीना च दृश्यते। दिवा जनानां लोचनानन्दं वितरन्ती कमलिनी ात्रौ सौभाग्यविहीना मलिना चावलोक्यते। निशायां मनुष्याणां ारितापं परिहरन् हिमांशुर्दिवा प्रभादरिद्रत्वं प्राप्नोति। मध्याह्नसमये ाहस्रांशुभिर्जनान् परितापयन् सहस्रांशुः सन्ध्याकाले अस्ताचलं ाच्छति अत एव यदाऽचेतना अपि जीवा विभिन्नसमये विभिन्नां ामां विषमां च दशामनुभवन्ति, तदा का कथा सचेतनानां ीवानाम् ?

परिवर्तनशीलेऽस्मिन् संसारे न कदाऽपि दृष्टमिदं यत् कोऽपि जीवः ात्यन्तां निकृष्टामेव दुःखदारिद्र्यमग्नां दशां सर्वदाऽनुभवति तथाऽपरः ाणी सर्वदा सुखसमुद्रमग्नामेवावस्थां प्राप्नोति। सदा नैकामेव दशां ाप्नोति कोऽपि जीव इति शास्त्रस्य प्राथमिकः सिद्धान्तः। योऽद्य दुःख- ापारपयोनिधौ निमज्जति स एव श्वः आनन्दकानने विहरति। यः

सुरसुन्दरीणां मध्ये क्रीडन् तासां गीतं नृत्यञ्च पश्यन् दिवसमतिवाह
स एव बीभत्सरूपाणां राक्षसानां मध्ये स्वजीवनयापनं करोति।
खलु सञ्चितबहुरत्नः कुबेर इव धनाढ्यो लक्ष्मीपतिरद्य प्रचुरतया
धनराशिमपि परिगणितुं न पारयति, स एव कतिचिद् दिनान
राजमार्गे परिभ्रमन् 'भिक्षां देहीति' रटन् दरिद्रपर्यायो भवति। विपर्
मस्य योऽद्य निर्धनः स्वोदरदरीपूरणाय सततं चिन्तां कुर्वन् तिष्ठ
स एव श्वः परश्वो वा पृथ्वीकुबेरः सञ्जायते। यः खलु अद्य प्राणप्रि
वियोगे दुःखपूर्णं दिवसं नयति स एव कतिपयदिनानन्तरमहर्
स्वप्रियया सह विविधाः क्रीडाः करोति। कथनस्यायमाशयो यत् संस
शीलेऽस्मिन् संसारे न कोऽपि पुरुषोऽत्यन्तं दुःखं प्राप्नोति न चा
न्तं सुखमेव लभते। यथा चक्रस्य नेमिः कदाचिद् नीचैर्गच्छति क
चिच्चोपरि गच्छति, तथैव मनुष्याणां दशाऽपि कदाचन दुःखस्यानु
करोति, कदाचन सुखं लभते। संसारस्य परिवर्तनशीलतामनुभ
कविकुलशिरोमणिना महाकविना कालिदासेन सम्यक् समुचि
कथितं मेघदूते यत्—

कस्याऽत्यन्तं सुखमुपनतं दुःखमेकान्ततो वा।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥

स्वराज्यात् परिभ्रष्टो द्यूताभिलाषी नलो वने वने विचरन्, वि
दशामनुभवन्, ऋतुपर्णस्य सारथित्वं सम्पादयन् पुनरपि स्वभा
क्रमेण राज्यं लब्धवानिति सुविदितमेव सर्वेषाम्। भारतीयेतिवृत्ते बहु
दाहरणानि सन्ति यैरुपर्युक्ततथ्यस्य परिपोषणं भवति। सुप्रसिद्ध
यद् दुरात्मना रावणेन लङ्कायामशोकवाटिकायां स्थापिता विषमां द
सहमाना सशोका सीता मर्यादापुरुषोत्तमेन रामेण दुःखनिवहाद् मोचि
पुनरपि विविधानि राज्यसुखानि बुभुजे। महाभारते विराटनगरेऽज्ञात
कुर्वाणाः, राज्यान्निष्कासिताः, विराटगृहाश्रयिणः, स्वीकृतदासवृ
पाण्डवाः पुनरपि स्वहृतं राज्यं प्राप्य चक्रवर्तिसुखमनुबभूवुः।

उदयपुरराज्याधिपो हिन्दूनां मानरक्षको मानवर्धकश्च महाप्रत
महाराणाप्रतापो महत् साम्राज्यं भुक्त्वा जीवनस्याऽन्तिमे काले साति

दुःखं प्राप्तवानिति को न जानाति तस्य करुणां दशाम् ? महाराष्ट्रस्वराज्य-संस्थापकश्छत्रपतिशिवाजी नृपो दुःखमयानि वर्षाणि यापयित्वा स्वमहा-प्रतापिना दैवेन महाराष्ट्रमण्डलस्य एकच्छत्रः सम्राड् बभूवेति सुप्रसिद्धि-मेवेतिहासविदां विदुषाम् । किं बहुना, स्वातुलप्रतापेन कम्पितसमस्त-यूरोपो दिग्विजयी नेपोलियनः स्वप्रतापसूर्यस्यास्तसमये 'सेण्टहेलने' ति नाम्नि स्थाने जीवनस्यान्तिमं समयं कारागारे व्यतीतवानिति विदितमेव विदुषाम् ।

इममेव सिद्धान्तमुररीकृत्य संसारेऽस्मिन् धीरप्रकृतयः 'धैर्यधना हि साधवः' न कदापि विषमैरपि दुःखैरुद्वेलिता भवन्ति । ते तु धीरता-मवलम्ब्य दुःखमयेष्वपि दिवसेषु प्रसन्नप्रकृतयो दृश्यन्ते । यतो जानन्त्येव ते यद् दुःखमयोऽयं कालो नैव चिरस्थायी । अवश्यमेव दीर्घेऽस्मिन् जीवने कदाऽपि सुखस्य संचारो भविष्यति । यथा 'शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्त्रिणम्' तथैव सुखं दुःखमनुवर्तते । दुःखवत् सुखमपि नैकत्र तिष्ठति, सर्वदाऽचिरस्थायि परिवर्तनशीलञ्च विद्यते । अत एव केनापि तथ्यमुक्तम्—

सुखमापतितं सेव्यं दुःखमापतितं तथा ।<br>
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च ॥



## १२. संघे शक्तिः कलौ युगे

अस्मिन् कलौ युगे संघे एव शक्तिर्वर्तते इत्यत्र नास्ति कस्यापि सन्देहलेशः। यानि महात्म्यमण्डितानि कार्याणि युगेऽस्मिन् भवन्ति भविष्यन्ति च तानि सर्वाणि संघरूपेणैव क्रियमाणानि सामर्थ्यवन्ति जायन्ते। यथैकस्तन्तुः अजाया अपि बन्धनं कर्तुमसमर्थः, तथैव एकाकी मनुष्यो विषमेऽस्मिन् काले न किमपि सम्पादयितुं शक्नोति; संघेन विनाऽचेतनवस्तून्यपि न किमपि कर्तुं प्रभवन्ति। यथैकस्तन्तुर्बालकैरपि भज्यते, परन्तु स एव अन्यैरनेकैस्तन्तुभिर्गुणत्वमापन्नो मत्तमातङ्गबन्धनाय समर्थः। समुचितमुक्तं केनापि कविना यत्—

"अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।
तृणैर्गुणत्वमापन्नैः बध्यन्ते मत्तदन्तिनः॥"

यथैकं काष्ठं न कस्यापि संतरणाय प्रभवति, परन्तु तदेव संघरूपमासाद्य नौकारूपेण महतीं सेनामपि नदीपारं नेतुं शक्नोति।

यथैकः कपालो जलधारणार्थं न प्रभवति, परन्तु स एव द्विगुणत्वमासाद्य महान्तमपि जलराशिं धारयितुं यतते। एकेन तण्डुलेन न एकस्यापि मनुष्यस्योदरदरीपूर्तिः संभवति, परन्तु स एव संघरूपतां प्राप्य वृकोदरस्यापि उदरपूरणार्थं प्रभवति। एकेन तिलेन न कदाऽपि तैलं लभ्यते, परन्तु तदेव सामूहिकरूपेण निष्पीडनतामवाप्य समधिकं तैलं दातुं प्रभवति। एकेन जलबिन्दुना नोपकारः कस्यापि भवितुं संभवति, परन्तु स एव धारारूपतामवाप्य धरातलं च प्लावितं कृत्वा कृषिं समृद्धशस्यां करोति, कृषकजनेभ्यश्च आनन्दराशिं वितरति।

यथाऽचेतनैः प्राणिभिः संघरूपतामनवाप्य न किमपि दृढं कार्यं पार्यते, तथैव चेतनैरपि प्राणिभिर्न कदाऽपि संघरूपेण विना किमपि कार्यं कर्तुं पार्यते। साम्प्रतं नानादेशेषु या राज्यक्रान्तयो दृश्यन्ते ता न कदाऽपि केनाप्येकाकिना पुरुषेण सम्पादिताः, परन्तु संघरूपेण जनतया

कृताः। फ्रांसदेशे या प्रसिद्धा राज्यक्रान्तिरभूत्, सा केवलमेकेन 'रूसो' नामधेयेन महात्मना किं सम्पादिता; प्रत्युत फ्रान्सदेशीयेन जनसंघेन कृता। रूसदेशे रुधिरसंयुक्तां राज्यक्रान्तिं कृत्वा या 'सोवियट' शासनस्य स्थापना कृता सा केवलं 'लेलिन' महोदयेन न सम्पादिताऽऽसीत्, अपितु रूसदेशीयजनतयैव। स्वनामधन्येन, प्रातःस्मरणीयेन, कर्मवीरेण मालवीयेन यद् हिन्दूविश्वविद्यालयस्य स्थापना कृता, तस्य समधिकाऽल्पेनैव कालेन समुन्नतिश्च सम्पादिता, तत् किमेकाकिना स्वीयेनैव परिश्रमेण? नहि नहि; सत्यपि तस्य भगीरथप्रयत्ने, देवदुर्लभे च त्यागे हिन्दू-जनतायाः सहयोगः, हिन्दूराजानां श्रेष्ठिनां धनकुबेराणां चाऽऽर्थिकसहायतैव विश्वविद्यालयस्य स्थापने समुन्नतौ च प्रधानं कारणञ्चाऽऽसीत्। अत एव नियतं प्रतिभाति यत् संसारेऽस्मिन् न किमपि कार्यं संघरूपेण विना भवितुं शक्नोति।

ब्राह्मणः सृष्टौ सर्वत्र संघे शक्तिः प्रभवतीति विषये न काचन विप्रतिपत्तिः साक्षान्न क्रियते। आकाशे यानि नक्षत्राणि दृश्यन्ते तान्यपि आकर्षणशक्त्या संघरूपेणैव स्थितानि सन्ति। किं बहुना, अस्माकमिन्द्रियाण्यपि संघरूपेणैव स्वकार्याणि निष्पादयन्ति। यदि तेषां मध्ये संघशक्तिर्न स्यात, तदाऽस्माकं जीवनयात्राऽपि दुर्लभा भवेत्। अत एव सर्वेषु कार्येषु संघशक्तिरतीवाऽऽवश्यकी विद्यते।

सम्यगेवाभिहितं महामतिना—

संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि।<br>
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः॥<br>
बहूनामल्पसाराणां समवायो दुरत्ययः।<br>
तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः॥



## १३. न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे

अस्मिन् संसारे दूरदर्शिताऽतीव माहात्म्यं धारयति सर्वेषां मानवानां कृते। दूरदर्शिनो जना महदपि कार्यं कर्तुं शक्नुवन्ति, परन्तु तदेव कार्यमदूरदर्शिनो मनुष्या नैव कर्तुं समर्थाः। दूरदर्शिताया ज्ञानं स्वल्पेस्वपि जीवेषु विद्यते, किमुत ज्ञानप्रधानेषु मनुष्येषु? नितान्तं स्वल्पकायापि पिपीलिका वर्षाकाले स्वभोजनार्थमन्यसमयेऽन्नस्य संग्रहं करोति। पक्षिणोऽपि वर्षासु जलधारापातादात्मानं रक्षितुं स्वनीडानि रचयन्ति। मधुमक्षिकापि संचितस्य रसस्य रक्षार्थं मधुकोशं निर्माति। यदीदृशाः क्षुद्रा अपि जीवाः स्वजीवनस्य रक्षार्थमीदृशानुपायान् रचयन्ति, तदा मनुजाः कथमलसमत्या भवन्तीत्यत्र हेतुं न विद्मः। यो मनुष्य आगामिनीमापदमनुमाय नैव स्वीयं कार्यं विधत्ते स सदैव विपत्पयोधौ निमज्जति। विपत्तेरुपायः प्रागेव विधेयोऽन्यथा विपत्तौ समुपस्थितायां न कोऽप्युपायः कर्तुं शक्यते। यत्राऽग्नेः प्रकोपस्य भयं तत्र प्रागेव भूमिं खनित्वाऽग्नेः प्रशान्तिकरणायोपायश्चिन्तनीयः। अन्यथा वह्निना प्रदीप्ते गृहे कूपखननस्य प्रयत्नो हास्यास्पदमेव भवति। कूपखननात् प्रागेव भस्मावशेषं नेष्यति तद् गृहं वह्निः। आभाणकोऽयं सत्यपूर्णो यत्—

"न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे।"

अत एव मनुष्यैः सर्वदा दूरदर्शिभिर्भवितव्यम्। यावत् शरीरमिदं रोगरहितं विद्यते, यावज्जरा दूरे तिष्ठति, यावदिन्द्रियाणां शक्तिरप्रतिहताऽस्ति, यावदायुषः क्षयो न भवति तावदेव मनुष्यैरात्मश्रेयसि प्रयत्नो विधेयः। यतो विपत्तिकाले समुपस्थिते तु न कोऽपि यत्नः कार्यसिद्धिप्रदो भवति। सम्यगेवोक्तं केनापि सुधिया—

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।

आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥

संसरणशीलोऽयं संसारः। अस्मिन् जगति यानि वस्तूनि सन्ति तानि सर्वाणि विनाशप्रायाणि सन्ति। नात्र किमपि चिरस्थायि विद्यते। अत एव सुधिया कार्यसम्पादने न कदाऽपि विलम्बो विधेयः। न किमपि कार्यं 'श्वः करिष्यामि' इति विचिन्त्य त्याज्यम्। यतः को जानाति यत् श्वः आगमिष्यतीति न वा। अत एव 'श्वः कार्यमद्यैव कुर्वीत'।

न कश्चिदपि जानाति किं कस्य श्वो भविष्यति।
अतः श्वः करणीयनि कुर्यादद्यैव बुद्धिमान् ॥

हिन्दीभाषायामपि केनापि कविना सुष्ठु समुपदिष्टम् :—

काल करै सो आज कर, आज करै सो अब्ब।
पल में परलय होयगी, बहुरि करोगे कब्ब ॥

अत एव बुद्धिमद्भिर्मनुष्यैः सर्वदा भविष्यं विचिन्त्यैव कार्यं करणीयम्। 'शुभस्य शीघ्रम्' इति न्यायमनुसृत्य तैः श्वः करणीयं कार्यमद्यैव सम्पादनीयं भवति। मनुष्योऽदूरदर्शी सन् नियतमेव महति विपत्पयोनिधौ निमज्जति।

संग्रामे साधारणे च व्यवहारे यो मनुष्योऽदूरदर्शितां प्रदर्शयति स सदा पराभवं प्राप्नोति। रामरावणयोर्युद्धे यदि रामचन्द्रः सुग्रीवेण मित्रतां कृत्वा महतीं वानरसेनां न समग्रहिष्यत् यदा महाप्रतापिनो रावणस्योपरि विजयं प्राप्तुमसमर्थ एवाभविष्यत्। महाभारतेऽर्जुननेनाष्टादशाक्षौहिणीमिताः सेनाः परित्यज्य यत भगवान् श्रीकृष्णः स्वपक्षे कृतस्तत्कार्यमिदं तस्य दूरदर्शितामेव सुतरां दर्शयति। श्रीकृष्णस्यैवालौकिकबुद्ध्या पाण्डवा विजयं प्राप्तवन्त इति विदितमेव महाभारतविदाम्। प्राचीनकाले सम्राजा चन्द्रगुप्तेन ग्रीकदेशीयसेल्यूकसस्योपरि यो विजयः प्राप्तः सोऽपि निजदूरदर्शितया महत्या सेनया एव। किं बहुना, अद्यापि संग्रामक्षेत्रे स एवं विजयलक्ष्मीं प्राप्नोति यः पूर्वकालादेव महत्याः

सेनाया संग्रहं करोति। यतः समुपस्थिते संग्रामे यः साधनहीनः स पराजयं प्राप्नोति किमत्र बहुनोक्तेन।

यथा प्रदीप्ते भवने कूपस्य खननं हास्यास्पदं भवति तथैव समुपस्थिते कार्ये तस्य साधनस्याऽन्वेषणं निरर्थकं भवति। यदा कस्याश्चित् विपत्तेराशङ्का विद्यते तदा तस्याः पूर्वमेव प्रतीकारश्चिन्तनीयः। अतः विविधासु अवस्थासु वैराग्यं परित्यज्य उत्साहमुररीकृत्य श्वो विधेयं कार्यमद्यैव करणीयमिति नीतौ नैव काञ्चन विप्रतिपत्तिं पश्यामः।



## १४. दीर्घौ बुद्धिमतो बाहू

संसारेऽस्मिन् बुद्धिमन्तो नरा एव गुरूणि कार्याणि कर्तुं प्रभवन्ति, न कदाऽपि मूर्खाः। अद्यावधि यानि सारभूतानि कार्याणि सन्ति तानि सर्वाण्यपि पण्डितैः, बुद्धिमद्भिश्च सम्पादितानि विद्यन्ते। कस्यापि कार्यस्य सम्पादने बुद्धिरेव प्रधानभूतं साधनं वर्तते मानवानाम्। बृहत्कायो बलवानपि मनुष्यो यदा बुद्धिहीनो भवति तदा तेन किमपि कार्यं कर्तुं न शक्यते। विपरीतमस्याल्पकायोऽपि मनुष्यो यदा बुद्धिसम्पन्नो भवति, तदा महदपि कार्यं सम्पादयितुं प्रभवति। कार्यस्य सम्पादने यथा बुद्धेरावश्यकता वर्तते न तथा बलस्य। यस्यास्ति बुद्धिस्तस्यैव बलम्। केनापि कविना समुचितमेवोक्तं यत्—

"बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।"

श्रूयते हि पुरा यत् कस्मिंश्चिद् वने एको भासुरकनामकः सिंहः प्रतिवसति स्म। स सर्वदा वन्यपशून् भक्षयित्वा स्वोदरस्य पूर्तिमकरोत्। एकदा सर्वैर्वन्यपशुभिर्मिलित्वेदं निश्चितं यदस्माभिः स मृगराजः प्रार्थनीयो यत् 'प्रातादनं वयमेकं जीवं तवाहारार्थं दातुमिच्छामः। त्वमस्माकं विनाशं मा कुरु' इति निश्चित्य तस्य सिंहस्य भक्षणार्थमेकः पशुः प्रतिदिनं तस्य पार्श्वं गच्छति स्म। एकदा छद्मनिपुणस्य शृगालस्य समयः समायातः। स तस्मिन् दिनेऽतिविलम्बं कृत्वा सिंहसमीपमगात्। विलम्बस्य कारणं पृष्टेन तेन शृगालेनोक्तं यत् "स्वामिन्। पथि मया एकः सिंहो दृष्टः, स मां खादितुमुद्यतोऽभवत्। तं सान्त्वनादिभिः सन्तोष्याऽऽगतोऽहं तव समीपम्।" सिंहः शृगालस्येदं वचनं श्रुत्वा क्रोधेन रक्तनेत्रो भूत्वा तारस्वरेण तमवोचत्—"दर्शय तत् स्थानं यत्र सोऽपरः सिंहो निवसति। अहमद्यैव तं व्यापादयिष्यामि।" शृगालः सिंहमानीय तमेकं कूपं दर्शयामास। यदा कूपस्य जले सिंहस्य प्रतिबिम्बो दृष्टस्तदा

सोऽवोचत् —"स्वामिन् ! अयमेवापरः सिंहो विद्यते येनाहं पथि बल निरुद्धः ।" बलवान् परन्तु मूर्खः स सिंहः कूपजले स्वप्रतिबिम्बं तमप सिंहं मन्यमानस्तं हन्तुं कूपे पपात, स्वप्राणांश्च तत्याजेति अल्पकायोऽ बुद्धिमान् प्राणी विशालकायमपि पुरुषं हन्तुं समर्थो भवतीति शिक्ष कथयाऽनया स्फुटमभिव्यज्यते ।

सुतरां बलहीनोऽपि मनुष्यो यन्मत्तानपि मातङ्गान् स्ववशं नयं तत्किं स्वबलेन ? उताहो पराक्रमेण ? निजयाऽलौकिकबुद्ध्यैव । मनुष्य प्राणघातकानपि वन्यपशून् यल्लुब्धकाः 'सरकस'-क्रीडाकुशलाः पुरुषाः घालयन्ति शिक्षयन्ति च विविधान् विचित्रान् व्यापारान् तत्किं स्वशारीरि कबलेन शक्त्या वा ? स्वतीक्ष्णबुद्ध्यैव चित्रं व्यापारं सम्पादयन्ती नराः । मार्गे-मार्गे, गृहे-गृहे, ग्रामे-ग्रामे जना यत् प्राणघातकान् भल्लु कान् प्लवङ्गमांश्च नर्तयन्ति तदपि बुद्धिबलेनैव । संसारेऽस्मिन् न किमपि वस्तु विद्यते यद् मनुष्येण बुद्धिवैभवेन स्वाधीनतां न नीतम् ।

अधुना यानि नूतनानि टेलीफोन, टेलीग्राफ, रेडियो, विद्युत् वायरलेस, ऐरोप्लेन, टैङ्क, टारपीडो, रेलवे, फोनाग्राफ—इत्यादयो बहव आविष्काराः सन्ति ते सर्वे मनुष्यबुद्ध्यैव निष्पादिताः सन्ति । यन्मनुष्य प्राणरहितमपि विद्युच्छकटं ( मोटरं ) सप्ततिक्रोशं प्रतिहोरं चालयति तदपि स्वबुद्धिबलेनैव । नितान्तं जडप्रकृतिरपि वाष्पगन्त्री ( रेलगाड़ी ) सहस्रान् मनुष्यान् वहन्ती सुदूरं देशान्तरं नयति तदपि मनुष्यस्य बुद्धेरेव वैभवम् । यदसाध्यं कार्यं स्वीयाभ्यां बाहुभ्यां भवितुं नार्हति तदेव बुद्धिबलेनातिसरलयैव रीत्या भवितुं शक्नोति । किं बहुना, स्वकीयेन चर्मचक्षुषा यद्वस्तु द्रष्टुं न शक्नोति मनुष्यः, तदेव मनुष्यबुद्ध्या निर्मितेन 'एक्सरे' इति प्रसिद्धेनाज्ञातकिरणेन दृष्टिगोचरं कर्तुं पार्यते अत एव बुद्धिबलं शारीरिकबलात् सर्वथा महत्तरं विद्यतेऽत्र नास्ति कस्यापि सन्देहलेशः ।

आङ्गलभाषायाः 'बुद्धिरेव बलम्' इति सुभाषितं सत्यं प्रतिभाति । रणाङ्गणे शस्त्रास्त्रवर्षणं कुर्वतां शत्रूणां मध्ये यो बुद्धिमान् स एव विजयी

भवति। पाण्डवानां स्वल्पाऽपि चमूः कौरवाणां यदक्षौहिणीमपि सेनां व्यनाशयत् तत्र जागर्ति भगवतः श्रीकृष्णस्य लोकोत्तरबुद्धेरेव प्रभावः।

बुद्धिमान् मनुष्यः स्वबाहुभ्यां कार्यसम्पादने नैव संलग्नो दृश्यते। तस्य प्रज्ञा एव चक्षुः, बुद्धिरेव बाहू इति निर्विवादम्। स बाहुभ्यामसाध्यमपि कार्यं स्वबुद्ध्या नूनं सम्पादयति। अत एव दीर्घौ 'बुद्धिमतो बाहू' इत्याभाणकस्य समीचीनतायां सत्यतायां च ध्रुवोऽस्माकं विश्वासः।

## १८. परोपकारः

### (१)

संसारेऽस्मिन् परोपकार एव सारः। यदि जगति परोपकारो
स्यात्, तदाऽयं संसारो नरकसदृशो भवेत्। परोपकारेणैव दरिद्राणा
निर्धनानाम्, निर्बलानाञ्च प्राणिनां प्राणरक्षा भवति। यदि सर्वे ज
परोपकारस्थानेऽपकारमेव कुर्युस्तदा लोकयात्रा असंभवा स्यात्। परो
कारेणैव धरिणीयं धृता विद्यते। अयमेव सर्वेषां धर्माणां प्रथमो धर्म
'परोपकारात् पुण्यं भवति, परपीडनञ्च पापाय कल्पते' इति अष्टाद
पुराणेषु व्यासस्य सिद्धान्तः। यथा—

"अष्टादश-पुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥"



अत एव सर्वदा सद्भिः परोपकारो विधेयः। यदा धनस्य जीवन
च नाशो नियतस्तदा कथं न परोपकारे धनानि जीवितं च परि
त्यानि। उक्तञ्च—

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्ते वरं त्यागो विनाशे नियते सति॥

संसारे ये खलु कीर्तिमन्तः सञ्जातास्ते सर्वेऽपि परोपकारेण
भगवान् शाक्यवंशोत्पन्नो गौतमबुद्धो यत् षड्वर्षाणि शरीरं कठिना
श्चर्ययाऽत्यन्तं कृशमकरोत्, तन्नैव निजस्वार्थसाधनाय, जगतामुपका
एव। दानवीरेण जीमूतवाहनेन स्वजीवनप्रदानं कृत्वा गरुडभयेन त्रस्त
नागानां कीदृश उपकारः कृत इति सुप्रसिद्धमेव सर्वेषां विदुषाम्।

प्राचीनकाले धर्मविजयिना प्रियदर्शिना सम्राजाऽशोकेन स्वसम
राज्ये मनुष्यचिकित्सालयाः पशुचिकित्सालयाः संस्थापिताः। राजम
स्योभयोः पार्श्वयोः प्रजानामातपरक्षार्थं छायाप्रधाना वृक्षा आरोपि
येन कठिनेऽपि निदाघसमये सूर्यस्य प्रखररश्मिना पान्था नोद्वि
भवेयुः। जनानामार्तिहरणमेव जीवितस्य महत्त्वमिति धिया महार

ऐश्वर्यवर्धनेन स्वधनं दरिद्रेभ्यो बहुवारं वितीर्णम्! एभिरेव कारणैरशोक-हर्षयोः पुण्यं नामाद्यापि लोकः सादरं गायति। परेषामार्तिनाशने यत्पुण्यं विद्यते तत्राश्वमेधशतैरपि लब्धुं शक्यते। एकदा भगवता रामचन्द्रेण ब्राह्मणशिशुं मृतमवलोक्य तस्य कारणभूतं शम्बूकं हत्वा तं पुनरपि जीवितं कृतवान्। अनेन परोपकारेण ब्राह्मणस्य हृदये य आनन्दराशिः प्रादुर्भूतस्तस्य वर्णनं कर्तुं कः खलु शक्नोति।

अस्मिन्नपि समये श्रेष्ठिभिस्तीर्थस्थाने धर्मशालानामन्नसत्राणाञ्च निर्माणं कृत्वा महत्पुण्यं नूनं संचीयते। भारतभूमेर्नानाप्रदेशादागत्य शरणहीना जनाः प्रासादसदृशासु धर्मशालासु शरणमवाप्य पुण्यमर्जयन्ति। अन्नशत्रेषु क्षुत्क्षामकण्ठा जनाः स्वोदरं पूरयित्वा यादृशं सुखमनुभवन्ति तस्य वर्णनं न कर्तुं शक्यते। स्थाने-स्थाने जलावतारस्य सरित्तटे निर्माणं कृत्वाऽमितं पुण्यं संचीयते श्रेष्ठिभिः। अस्मादेव प्रभूत-पुण्य-संचयस्य प्रतापात् ते न कदाऽपि निर्धनतां प्राप्नुवन्ति। अयमेव पुण्य-राशिस्तेषां कृते स्वर्गस्य द्वारमुद्घाटयति, अपवर्गस्य च मार्गं निर्बाधं करोति। अत एव परोपकारः सर्वदा पुण्याय भवतीति निश्चित एव सिद्धान्तः।

परपीडनं सर्वदा पापाय भवति। परपीडने रतानां सर्वेषां जनानां वैभवनाशः समजनि। संसारेऽस्मिन् परपीडने लग्नस्य राज्ञः पुरुषस्य वा न कदाऽपि कल्याणं दृष्टं श्रुतं वा। प्राचीन-समये कंसनामधेयो मथुरायाः परमप्रतापी प्रजोत्पीडको राजा बभूव। तेन दुरात्मना निपराधिनो वसुदेवस्य सप्तापत्यानि हतानि। किं फलम-भवत् तस्य परमस्य पीडनस्य? भगवता श्रीकृष्णेन स दुरात्मा अन्ततो-गत्वा व्यापादितः। आसीत् परदारस्तेयी रावणः परमप्रजापीडकः। तस्यालौकिकेन बलेन देवा अपि वश्यतामनीयन्त, किमुत मनुष्याः। निरपराधिनं स्वभ्रातरं विभीषणं सभामध्ये पादेन ताडयित्वा तेन महानपराधः कृतः। यदा प्रजापीडनकर्मणा तस्य पापस्य भाण्डं परि-पूर्णमभवत्, तदा भगवता रामचन्द्रेण तस्य शिरःकर्तनं सम्पादितम्।

यदा हिरण्यकश्यपोविष्णुभक्तिपरायणस्य प्रह्लादस्योपरि अत्याचा परां काष्ठामगात्, तदा भगवता नृसिंहेन तस्योदरं द्विधा विदीर्णम्। कि बहुना, अस्मिन्नपि काले ये राजानः प्रजापीडका आसन्, ते ना घातिता वा। न केवलं राजानः, परन्तु प्राकृता अपि जना यदि परे पीडनमाचरन्ति तदा तेषां नाशो नियतः। निर्बलानां पीडनं कदापि सुख-समृद्ध्यै भवति। रहीमनाम्ना भाषाकविना समुचितमेवोक्तम्—

निर्बल को न सताइये, जाकी मोटी हाय।
मुई चाम की सांस ते, सार भसम होई जाय॥

अत एव न केनापि पुरुषेण कदाऽपि निर्बलस्योत्पीडनं कर्तव्यम् यतस्तस्य फलं पापमेव संजायते। अतो भगवतो व्यासस्य सारगर्भि वचनमिदं सत्यमेव प्रतिभाति यत्—

"परोपकारः पुण्याय पापाय परपीडनम्" इति।

( २ )

## परोपकाराय सतां विभूतयः

सज्जनेभ्यः संसारेऽस्मिन् न किमपि वस्तु स्वकीयं परकीयं वा विद्यते; यतः 'वसुधैव कुटुम्बकम्' इति तेषां सिद्धान्तः। अत एव ते सर्वान् जीवान् समानदृष्ट्या पश्यन्ति। यथा घना वृक्षाश्च सर्वेभ्यो जीवेभ्यो जलं फलञ्च दत्वा तेषामार्तिनाशं कुर्वन्ति, तथैव सज्जना अपि स्वविभवेन दरिद्राणां दुःखितानां च दुःखापहरणं सम्पादयन्ति। रविश्चन्द्रो घना वृक्षाः सज्जनाश्च युगे-युगे दैवेन केवलं परोपकाराय प निर्मिता भवन्ति।

रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः।
एते परोपकाराय युगे दैवेन निर्मिताः॥

परेषामुपकारः सज्जनानां स्वभावो वर्तते। तेषां शरीरस्य शोभा परोपकारेण भवति, न खलु चन्दनलेपनेन। उक्तञ्च—

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः खलु सज्जनानां परोपकारैर्न तु चन्दनेन ॥
सज्जना विपद्गता अपि न कदाऽपि परोपकारं त्यजन्ति ।
तृणमात्र-भक्षण-तत्पराः करिणो यथा दानद्रवं कुर्वन्त्येव ॥
कृच्छ्रानुवृत्त्योऽपि हि परोपकारं त्यजन्ति न महान्तः ।
तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥
सज्जनानां परोपकारव्यसनविषये कोऽपि कविः कथयति—
रागिणि नलिनीलक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥

अस्माकं कथनस्याऽयमेवाभिप्रायो यत् सज्जनाः प्रकृत्या परोपकारनिरताः भवन्ति । परोपकारस्तेषां स्वभावे वर्तते । ते तु सर्वदा परहितसम्पादन एव बद्धपरिकरा दृश्यन्ते । तेषां कृते न किमपि स्वार्थसाधनमस्ति, परन्तु सर्वः परोपकारः ।

यद्येवंभूताः सज्जनाः परार्थे स्वसर्वस्वमर्पयन्ति तर्हि किमाश्चर्यम् । सज्जनानां स्वधनं स्वजनं स्वकुलमपि परेषां लाभाय एव भवति । किं बहुना तेषां प्राणा अपि परेभ्यः समर्पिताः सन्ति । आत्मार्थं संसारे को मनुष्यो न जीवति ? परन्तु तस्यैव जीवनं श्लाघ्यं यः परार्थं जीवति । उक्तञ्च—

आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः ।
परं परोपकाराय यो जीवति स जीवति ॥

फलभारेण समन्विता वृक्षा किं स्वार्थाय फलन्ति ? परेषां तर्पणप्रयोजनमेव तेषां फलानि जायन्ते । गावः किं मधुरं स्वादिष्ठञ्चामृतकल्पं दुग्धं स्वपानार्थं ददति ? केवलं परेषां लाभार्थमेव । भगवती भागीरथी केन स्वकीयेन स्वार्थेन प्रवहति ? सा तु केवलं जनानामुपकारार्थमेव जलानि धारयति यदि गङ्गा न स्यात् तर्हि अन्नाभावाद् बहवो मनुष्याः क्षुधापीडनेन मृताः स्युः । उक्तञ्च केनापि कविना—

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥

अनेनैव प्रकारेण परोपकारार्थमेव सज्जनाः स्वजीवनं धारयन्ति। तेषां कृते परमार्थ एव स्वार्थः। श्रूयते हि पुरा यद् राज्ञा शिविना कपोतस्य रक्षार्थमेव स्वदेहस्य मांसमुत्कृत्योत्कृत्य श्येनाय प्रदत्तम्। दयावीरेण परमकारुणिकेन महात्मना जीमूतवाहनेन गरुडाद् नागानां प्राणरक्षार्थं स्वबहुमूल्यमपि जीवितं परित्यक्तम्। 'सदयहृदयदर्शित पशुघातेन' भगवता बुद्धेनापि एकस्य क्षुद्रस्य मृगस्य त्राणार्थं स्वदेहं काशिराजशस्त्राणां कृते लक्ष्यं समुपस्थापितम्। राजर्षिणा अशोकेन संसारेऽस्मिन् अहिंसायाः प्रचारार्थं सुविस्तृतमपि राज्यं परित्यज्य भिक्षुपदं गृहीतम्। भक्तिप्रचारकेण महात्मना ईसामसीहेन लोकेऽस्मिन् शान्तिस्थापनार्थमेव स्वप्राणाः परित्यक्ताः। किं बहुना, महाराजेन श्रीहर्षवर्धनेन तु तीर्थराजे प्रयागे स्वं सम्पूर्णमपि कोशं धनञ्च दरिद्रेभ्यो वितीर्य दरिद्रता स्वीकृतेति विदितमेवेतिहासपाठकानाम्।

सन्त्यस्मिन् समयेऽपि बहवो मनुष्या येषां धनं जीवितञ्च परार्थमेव समर्पितम्। एतेषां मनुष्याणामग्रगण्या बिड़लाभ्रातरः सन्ति, यैः परोपकारार्थं बहुलक्षपरिमितं द्रव्यं प्रदायापि सन्तोषो न प्राप्तः। 'महामना' उपाधिविभूषितेन मालवीयेन तु हिन्दूजनतायाः परोपकारार्थं हिन्दूविश्वविद्यालयस्य संस्थापनार्थञ्च स्वसमस्तं जीवनं समर्पितम्। तेन हिन्दूजात्युद्धारकेण कर्मवीरेण चिराय स्वकीयाऽर्थोपार्जनं देशस्य कार्ये हिन्दूजनतायाः समुन्नत्यै च स्वजीवनस्यापि व्ययः कृतः। सज्जनानां शिरोमणिना महात्मना गान्धिना तु जनतार्जनार्दनस्य सेवार्थं स्वधनम्, स्वजनम्, स्वजीवितमपि समुपहारीकृतम्। सेवापरायणेन तेन सेवाग्रामे जनतायाः सेवां स्वीकृत्य दरिद्रता समाश्रिता। तेन स्वीयं धनं दरिद्रेभ्यः, स्वकीयमाश्रमं हरिजनेभ्यः, स्वकं जीवितमतिपीडितेभ्यः प्रदत्तम्।

अत एव निश्चितमिदं ज्ञायते यत् सज्जनानां धनं परोपकाराय एव भवति। तेषां कृते न कोऽपि स्वार्थो विद्यते, प्रत्युत सर्वं परोपकारार्थमेव। अतो युक्तमुक्तं केनापि कविना यत्—

"परोपकाराय सतां विभूतयः"

## १६. अहिंसा परमो धर्मः

अस्माकं धर्मेऽहिंसायाः स्थानमतीव महत्त्वपूर्णं विद्यते। यादृशं श्रेष्ठं स्थानमस्माकं धर्मे प्राप्तमहिंसया, न तादृशं संसारस्य कस्मिंश्चिदपि धर्मे विद्यते। किं बहुना, 'अहिंसा परमो धर्मः' इति निखिलशास्त्र-सिद्धान्तः। अहिंसाधर्मस्यैव पालनेन बुद्धस्य गणना दशावतारमध्ये क्रियते। अहिंसाऽऽचरणेनैव भगवान् महावीरः सर्वेषां मानवानां पूजापात्रतामगमत्। भगवता मनुना दशलाक्षणिकधर्मस्य गणनाया-महिंसायै स्थानं सर्वप्रथमं प्रदत्तम्—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

दैवीमासुरीञ्च सम्पदं विवेचयता श्रीकृष्णेन श्रीमद्भगवद्गीताया-महिंसाया अपि गणना दैवीसम्पत्तौ कृता। उक्तञ्च यथा—

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥
भवन्ति संपदं दैवीमभिजातस्य भारत।

यदहिंसायाः समधिकं माहात्म्यं तत्तु भगवतो श्रीकृष्णस्य वचने-नानेन स्पष्टमेव। अस्माकं धर्मशास्त्रेष्वपि अहिंसाधर्मस्य पालनमतो-वावश्यकं प्रतिपादितम्। सर्वेषामेतेषां कथनानामयमेव सारांशो यद-स्माकं शास्त्रेऽहिंसाया महत्त्वं सातिशयं वर्तते।

निरपराधानां जीवानां हिंसनं न विधेयमिति स्फुटमहिंसायास्ता-त्पर्यम्। गृहस्थापेक्षया संसाराद् विरक्तानां संन्यासिनां कृते एवायं धर्मः; यतस्ते एवास्य धर्मस्य सम्यक् परिपालने समर्था भवन्ति।

कस्यापि निरपराधजीवस्य हिंसनमवश्यमेव निन्दनीयं विद्यते। अहिंसायाः पालनं मनसा, वाचा, कर्मणा कर्तव्यमतः कस्यापि विषये दुर्भावः कठोरवचनञ्चापि हिंसायां परिगणितम्। अत एवाहिंसायाः सर्वथा शुद्धधिया पालनं सर्वेषां प्राणिनां परमं कर्तव्यम्।

परन्त्वहिंसा तावदेव धर्मोऽस्ति यावत् स्वपरिमिते क्षेत्रे विद्यते। यदाऽहिंसा धार्मिकक्षेत्रमतिक्रम्य राजनैतिके क्षेत्रे व्यावहारिकजीवने च समायाति तदेयं न धर्मः; तदा चाहिंसायाः पालनमेव हिंसाऽस्ति। राजनैतिकक्षेत्रेऽस्माकं धर्मशास्त्रे 'शठे शाठ्यं समाचरेत्' इति नीतिः समुपदिष्टा। राजनीतिनिपुणेन कौटिल्येनापि कण्टकेनैव कण्टकशोधनमुपदिष्टम्। ये खलु प्रतिपादयन्ति यदहिंसा सर्वदैव भारतवर्षस्य संस्कृत्या सभ्यतया चानुमोदिता विद्यते, तेषां वचनं नैव श्रद्धास्पदम्। भारतीयसंस्कृतौ केवलं धार्मिके क्षेत्रे एवाहिंसापालनस्य महिमा गीतो न कदापि राजनैतिके क्षेत्रे समाजे वा। भगवता मनुना स्पष्टमेव प्रतिपादितं यद् गुरुं वा बालं वा वृद्धं वा ब्राह्मणं वाऽऽततायिरूपेणाऽऽयान्तमविचारयन्नेव हन्यात्। उक्तञ्च तेन महर्षिणा—

गुरुं वा बालवृद्धं वा ब्राह्मणं वा विपश्चितम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥

धर्मशास्त्रैः सर्वदा ब्राह्मणोऽवध्यः प्रतिपादित, परन्तु मनोर्मते यदि ब्राह्मणोऽपि आततायी वर्तते तर्हि सोऽपि विचारं विनैव हन्तव्यः। भगवता श्रीकृष्णेनापि महाभारते त्यक्तगाण्डीवायार्जुनाय स्वशत्रूणां विहिंसनं समुपदिष्टम्। क्षत्रियाणामयमेव धर्मो यत् शत्रूणां विनाशनं नाम। भगवान् श्रीकृष्णोऽर्जुनं प्रति कथयति यत्—

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥

श्रीकृष्णेन सदा युद्धाय एवोपदेशः कृतः। भगवता रामचन्द्रेणापि समये समयेऽहिंसायाः पालनं परित्यज्य हिंसाधर्मः स्वीकृतः। वृक्षैरन्तर्हितेन तेन कृतो वालिवधः प्रसिद्ध एव। यदा रावणो विभीषणस्योपदेशेनापि सीतां समर्पितुं नोद्यतो बभूव, तदा रामचन्द्रः सैन्यैर्लङ्कामुपरुध्य रावणस्य ससैन्यस्य संहारमकरोत्। शान्तिधर्मदीक्षितेन परशुरामेण

ब्राह्मणेनापि दुष्टानां नाशाय बहुवारं शस्त्रं गृहीतम्। एभिरुदाहरणैः स्पष्टमेव ज्ञायते यद् राजनैतिके सामाजिके व्यावहारिके च क्षेत्रे उचितेष्ववसरेषु हिंसाधर्मस्य स्वीकरणमेव कल्याणकरम्।

इयं सृष्टिरपि हिंसाया एवोपरि स्थिता विद्यते। महत्तराः कीटाणवः क्षुद्रं कीटाणुं नाशयन्ति; महत्तरा मत्स्याः लघु मत्स्यं भक्षयन्ति, श्येनोऽल्पप्राणं शुकं व्यापादयति, सिंहो मृगं खादति। अनेन प्रकारेण सृष्टेरेकः प्राणी अपरस्मिन् जीवति। अतः सत्यमुक्तं महर्षिणा व्यासेन—"जीवो जीवस्य जीवनम्" इति। यदा सृष्टेः सर्वे जीवाः हिंसारताः सन्ति, तदा अहिंसाधर्मस्य सम्यक् पालनमतीव दुष्करं प्रतिभाति। अहिंसाधर्मः संन्यासिनामेव धर्मः, न तु गृहस्थानां राज्ञां वा। युधिष्ठिरमुपदिशन्त्या द्रौपद्या साधु भणितं यत् शमेन अहिंसया च मुनयः सिद्धिं व्रजन्ति, न तु भूभृतः।

> व्रजन्ति शत्रूनवधूय निस्पृहाः
> शमेन सिद्धिं मुनयो न भूभृतः।

अत एव धर्मविषय एव 'अहिंसा परमो धर्मः' इति सिद्धान्तो विद्यते। राजनैतिके सामाजिके व्यावहारिके च विषये हिंसाधर्मस्यैव पालनं कर्तव्यम्। क्षेत्रेष्वमीषु अहिंसायाः पालनमेव हिंसा वर्तते। अत एव क्षेत्रानुसारेणावसरविशेषमालोक्यैवाहिंसायाः पालनं विधेयमिति नीतिः।



## १७. ब्रह्मचर्यम्

अस्माकं महर्षिभिर्मनुष्याणां जीवनस्य चत्वारो भागाः कृताः, तेषां प्रथमो ब्रह्मचर्यः, द्वितीयो गृहस्थाश्रमः, तृतीयो वानप्रस्थः, चतुर्थश्च संन्यासो विद्यते। एषां विभागानां सर्वप्रधानं प्रयोजनमिदमेवासीद् यद् मनुष्यो विहाय सर्वान्यान् प्रपञ्चान् तमेवार्थं प्रधानरूपेण कुर्यादिति। चतुराश्रमपरायणा भारतीया ब्रह्मचर्यकाले अन्यान् व्यापारान् परित्यज्य विद्याभ्यासं कुर्वन्तो ब्रह्मचर्यं पालयन्तु। ब्रह्मचर्यस्य पालनानन्तरमेव विद्यार्थिनो गृहस्थाश्रमभजन्त। अत एव एकस्मिन् समये एकस्यैव कार्यस्य सम्पादनात् ते तस्मिन् नैपुण्यं प्राप्नुवन्।

'ब्रह्म वेदः तं चरति, आचरति, पठति वा स ब्रह्मचारी' तस्य भावो ब्रह्मचर्यमुच्यते। केषाञ्चन विदुषां मते वीर्यस्य रक्षणमेव ब्रह्मचर्यं कथ्यते। अन्येषां मतमिदं विद्यते यद् ब्रह्मणो ज्ञानमेव ब्रह्मचर्यमस्ति। वस्तुतस्तु वीर्यस्य रक्षणम्, वेदानां स्वाध्यायश्चाभे अपि ब्रह्मचर्यशब्देन प्रख्यापिते स्तः। ब्रह्मचारिणामेतत् प्रधानतमं कर्तव्यं वीर्यस्य रक्षणं वेदानां पठनं च नाम।

"एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः॥"

इति वदता मनुना तेषां ब्रह्मचारिणां कृते वीर्यस्य रक्षणमेव प्रथमं कर्तव्यं प्रतिपादितम्। अत एव स्पष्टमिदं प्रतिभाति यद् ब्रह्मचर्यकाले सर्वैरपि विद्यार्थिभिः स्ववीर्यस्य रक्षा विधेया वेदानां च स्वाध्यायोऽवश्यमेव कर्तव्यः।

ब्रह्मचर्यपालनस्यातीवाऽऽवश्यकता विद्यते। अस्माकं महर्षिभिरस्य महिमा तारस्वरेणोद्घोषितः। ब्रह्मचर्यविरहितो जनो लोकेऽस्मिन् न किमपि महत्त्वपूर्णं कार्यं कर्तुं प्रभवति। ब्रह्मचर्याचरणात् शरीरे बलं

वृद्धिमयते, उत्साहश्चाधिक्यमायाति। बलाधिक्येन मनुष्योऽसाध्यमपि कार्यं सुसाध्यं कर्तुं पारयति। ब्रह्मचर्यव्रतदीक्षाहीनो दीनो जनो नैव स्ववृत्तमपि रक्षति। वृत्तहीना मनुष्याः संसारे भारभूताः सन्तीति नास्ति कस्यापि सन्देहलेशः। समुचितमेवोक्तं केनापि कविना यत्—

"अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः"

ब्रह्मचर्यस्य महिमाऽलौकिका विद्यते। ये मनुष्या अस्य पालनं कुर्वन्ति, ते मृत्युमपि जेतुं प्रभवन्ति, किमुत सांसारिकान् विषयान्। ब्रह्मचर्यस्यैव बलेन देवा मृत्युमपि अजयन्; श्रुतिरपि तारस्वरेणोद्घोषयति यत् "ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत।" देवा यदमराः सञ्जातास्तत्तु ब्रह्मचर्यस्य बलेनैव। अहो कीदृशं तेषां वैचित्र्यं यत्ते कदाऽपि जरां मृत्युञ्च नानुभवन्ति। निश्चितमिदं ब्रह्मचर्यप्रभावेणैव। ब्रह्मचर्यमेव जीवनमिति प्रसिद्धमेव सुभाषितं सर्वेषाम्। सर्वे महर्षयो वीर्यस्य एकस्यापि बिन्दोः पतनं मरणमामनन्ति। तद्बिन्दोः रक्षणं जीवनमाकलयन्ति—

मरणं बिन्दुपातेन जीवनं बिन्दुधारणात्।

प्राचीनकाले ब्रह्मचर्यपरायणा एव मरणशीला अपि पुरुषा अमृतत्वमभजन्। बालब्रह्मचारिणा भीष्मपितामहेन ब्रह्मचर्यस्यैव प्रतापात् स्वमृत्युरपि जिता इति जानन्त्येव महाभारतपाठकाः। वीराग्रणिना पार्थेन प्रदत्तां शरशय्यां षड् मासान्युषित्वा वीरपुङ्गवेन तेन स्वेच्छानुसारेणैव प्राणाः परित्यक्ताः। बलवता हनुमता सीतामन्वेष्टुं यद् विशालोऽपारः पयोनिधिस्तीर्णस्तदपि ब्रह्मचर्यस्य प्रभावेणैव। शंकरस्यावतारभूतेन भगवता श्रीशंकराचार्येण यदल्पकाल एव देशादस्माद् बौद्धधर्मं समूलमुच्छिद्य पुनरपि वैदिकधर्मस्य प्रतिष्ठा कृता, तत्किं स्वशारीरिकशक्त्या? अथवा दैहिकबलेन? तदपि ब्रह्मचर्यस्य प्रतापादेव। आधुनिकेऽपि काले आर्यसमाजस्य संस्थापकेन, हिन्दुधर्मरक्षकेण, स्वनामधन्येन महर्षिणा दयानन्देन यद् भारतवर्षेऽभूतपूर्वा सामाजिकी क्रान्तिः सम्पादिता तत्किं तस्य वाचालतया, विद्वत्तया वा? स्वब्रह्मचर्यस्य

प्रभावेणैव तेनापि महर्षिणा ईदृशमेवालौकिकं कार्यं सम्पादितम्। अतः स्पष्टं यत् संसारेऽस्मिन् ब्रह्मचर्यव्रतपरायणैः सर्वदाऽलौकिकमाचरितमिति ।

प्राचीने समये छात्रावस्थायां ब्रह्मचर्योपरि समधिकं महत्त्वं दीयते स्म। सर्वेषां छात्राणां कृते ब्रह्मचर्यपालनमतीवावश्यकं चासीत्। आसीत् स्वाध्यायदप्यधिकं तेषां कृते ब्रह्मचर्यस्य महत्त्वम्। तेषामाहारविहारनियमा अतीव कठिना आसन्। ब्रह्मचारिनियमान् महर्षिमनुरित्थं प्रतिपादयति—

वर्जयेन्मधुमांसं च गन्धं माल्यं रसान् स्त्रियः।
सूक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥
द्यूतं च जनवादं च परिवादं तथाऽनृतम्।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥

एतेषां कठोरनियमानामिदं फलमासीद् यद् विद्यार्थिनो भोगेभ्यः पराङ्मुखाः सन्तो वेदशास्त्रानुशीलनमेव सम्यक् समपादयन्, परन्तु साम्प्रतं कापि विचित्राऽधोगतिर्दृश्यतेऽस्माकं छात्राणाम्। दूरं गता स्वाध्यायचर्चा, पलायितं ब्रह्मचर्यपालनम्; स्वान्तन्त्र्यप्रियास्ते ब्रह्मचर्यपालनमेकं दुर्गुणं मन्यन्ते।

कराले कलिकाले विश्वव्याधिसमन्विते समयेऽस्मिन् केनोपायेन ब्रह्मचर्यस्य रक्षा विधेयेति महान् प्रश्नः। केन पथा वयं सदाचारयुक्तं जीवनं व्यतीतं कर्तुं शक्नुम इत्यस्ति विषमा समस्या। अस्मिन् सदाचारविच्छृङ्खलेऽपि समये दृढप्रतिज्ञो मनुष्यश्छात्रश्च ब्रह्मचर्यस्य पालनं कर्तुं शक्नोति। निम्नाङ्कितान् कतिपयोपायानवलम्ब्य मनुष्यैः स्वब्रह्मचर्यं रक्षितुं पार्यते—

(१) ब्रह्मचर्यस्य रक्षार्थं छात्रैः सर्वदा सदाचारप्रतिपादकानां ग्रन्थानां विधेयमध्ययनम्। आधुनिके समये बहवो देशीभाषायामुपन्यासाभिधानाः कथाः प्रकाशिता विद्यन्ते, यासां सुन्दरामघोरप्रकृतीनां

कामुकानां निकृष्टतरा प्रेमचर्चा एव मुख्यो विषयः। अत एव छात्रैः कुत्सितसाहित्यस्य पठनं सर्वदा परित्याज्यम् ।

( २ ) आधुनिकसमये चित्रपटम् (सिनेमा) एकं महदुपयोगि वस्तु विद्यते, परन्तु अस्य दुरुपयोगः क्रियतेऽधुना। चित्रपटे विविधानां सुन्दरीणां चित्रं दर्शयित्वा जनानां चित्ताकर्षणं कुर्वन्ति चित्रपटप्रबन्धकाः। कतिपयावसरेषु चित्राणि इमानि नग्नानि भवन्ति। एषां चित्राणां छात्राणां कोमलहृदयेऽतिविषमः प्रभावो भवति। ते क्रमशो दुराचार-पदवीमनुधावन्ति। अत एव चित्रपटदर्शनं यथाशक्ति छात्रैः परित्याज्यम्।

( ३ ) 'सत्संगतिः कथय किन्न करोति पुंसाम्' इति सुभाषितं सत्यम्। अत एव छात्रैः सर्वदा दुर्जनानां सङ्गं त्यक्त्वा सत्संगतिः कर्तव्या।

उपायैरेभिर्मनुष्यैर्विशेषेण छात्रैश्च ब्रह्मचर्यस्य पालनं सर्वदा सर्वथा च करणीयम्।



## १८. आर्जवं हि कुटिलेषु न नीतिः

संसारेऽस्मिन् सरलः, ऋजुः, हिंसारहितः, सर्वजनसम्मानितो मार्ग एव समीचीनः। यतः सरलः स्वाभाविको मार्गः सर्वदैव सत्ययुक्तो हिंसाविरहितो भवति। तस्य मार्गस्यानुसरणमधिकं कल्याणकरं श्रेयस्करञ्चास्ति। यथा कस्यचिद् नगरस्य पर्यटने राजमार्ग एवाधिकः सुखदो भयरहितोऽस्ति, तथैव लौकिकव्यवहारेऽपि सरलः पन्थाः शुभदो भवति। छलकपटानृतैर्युक्ता सरणिः सर्वदा दुःखदायिकाऽशांतिकरी विद्यते। अत एवास्माकं मुनिभिराचार्यैश्च सर्वदा एवमुपदिष्टं यत् संसारे निष्कपटो व्यवहारः कर्तव्यः। 'ऋजुनैव वर्त्मना वर्तेत' अस्तीयमस्माकं प्राचीना परम्परा। "आत्मनः प्रतिकूलानि परेषां न समाचरेत्" एवमुपदिशता मुनिनास्यैव सिद्धान्तस्य प्रतिपादनं कृतम्। खीष्टधर्मस्य संस्थापकेन महात्मना 'ईसा' महोदयेन स्पष्टमेव प्रतिपादितं यद् यः कश्चित् कस्यचित् कपोले एकां चपेटिकां ददाति, तदा तेन द्वितीयोऽपि कपोलश्चपेटिकार्थं तस्मै दातव्यः, परन्तु न कदापि विपरीतो व्यवहारः कर्तव्यः। 'अहिंसा परमो धर्मः' इति प्रतिपादयता शाक्यमुनिनापि अयमेव सिद्धान्तः समर्थितः। अधुनापि ये खलु महात्मानस्ते वदन्ति यत् कुटिलेषु पुरुषेषु आर्जवस्य नीतिरेव श्रेयस्करी, विषमास्वपि अवस्थासु अहिंसायाः पद्धतिरेव समीचीना। किं बहुना, शस्त्रास्त्रसंकुले महासंग्रामेऽपि अहिंसायाः पालनमेव हितकरं समुचितञ्चास्ति। केचन महात्मान इदमपि प्रतिपादयन्ति यत् 'हस्तिना ताड्यमानोऽपि न कुर्यात् शस्त्रधारणम्।'

परन्तु सन्ति कतिपया अवस्था यासु शस्त्रधारणं कपटव्यवहारः, मिथ्याप्रलापः, मिथ्याविडम्बनं, कटुभाषणमेव श्रेयस्करं सुखदञ्च भवति। प्राधान्यतो दुष्टजनैः सह व्यवहारे न कदाऽपि आर्जवेन कार्यं भवति। मूर्खजनैः सह व्यवहारे न कदापि सुधासदृशैर्मधुरवचनैः कार्यं संभवति।

तत्र तु शरसदृशैस्तीक्ष्णवचनैरेव कार्यस्य सिद्धिर्जायते। यत् कार्यं कोटिमृदुवचनैः कर्तुं न पार्यते तत्तु हृदयतुदा एकेनैव कटुवचनेन कर्तुं शक्यते। मानवस्वभावस्य शुद्धतायां पवित्रतायां च नैव कदाऽपि विश्वसिमो वयम्। "सर्वेषां मनुष्याणां स्वभावः शुद्धोऽस्ति" इति दोषयुक्तोऽयं सिद्धान्तः। दुष्टा मनुष्याः कोटिशो नम्रताप्रदर्शनेनापि न कदाऽपि स्वाभाविकीं दुर्जनतां त्यजन्ति। यथा "पयःपानं भुजङ्गानां केवलं विषवर्धनम्" भवति, तथैव मृदुवचनानि दुष्टजनानां कृते तेषां क्रोधोद्वेगकराणि भवन्ति। केनापि कविना सत्यमेवोक्तं यत्—

अलकाश्च खलाश्चैव मूर्ध्नि भीरुजनैर्धृताः।
उपर्युपरि सत्कारेऽप्याविष्कुर्वन्ति वक्रताम्॥

अत एव दुष्टजनानां वक्रता निवारणार्थं तेषां मुखस्य उपानत्पूजैव समीचीना प्रतिक्रियास्ति। तेषां सत्कारोऽजागलस्तनवद् निष्फलो निरर्थकश्च सञ्जायते। अत एव दुष्टजनैः सह मृदुव्यवहारः सर्वथा सर्वदा चासमीचीनः।

अस्माकं शास्त्रेषु कुटिलजनेषु आर्जवस्य व्यवहारो न कदापि समुपदिष्टः। कौटल्यार्थशास्त्रस्य सुप्रसिद्धेन लेखकेन कुटिलनीतिपटुनाऽऽचार्यकौटिल्येन कण्टकेनैव कण्टकशोधनं समुपदिष्टम्। 'कण्टकेनैव कण्टकं' इत्यस्ति अस्माकं राजनीतेः प्राथमिकः सिद्धान्तः। आततायिषु न कदापि नम्रता प्रदर्शनीया। तेषां शिरःकर्तनक्रियैव सम्यक् प्रतिकारः। ब्राह्मणमपि आततायिनमविचारयन्नेव हन्यादित्युपदिशता मुनिना मनुना भारतीयराजनीतेः सारभूतः सिद्धान्तः सुष्ठु प्रतिपादितः। तेनोक्तं यत्—

"गुरुं वा बालवृद्धं वा ब्राह्मणं वा विपश्चितम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥"

महाभारतेऽपि "सूच्यग्रं नैव दास्यामि विना युद्धेन केशव!" इति वदता मायाविना दुर्योधनेन सह मायाविनो भूत्वैव पाण्डवाः सफलतामगच्छन्। भीष्मवधार्थं शिखण्डिनं पुरस्कुर्वता कपटव्यवहारनिपुणेन अर्जुनेनैव जयश्रीः प्राप्तेति प्रसिद्धमेव। महाभारत एव द्रोणाचार्यस्य

वधं कर्तुम् 'अश्वत्थामा हतो नरो वा कुञ्जरो वा' इति मिथ्याप्रलापं कुर्वता धर्मप्राणेन धर्मपुत्रेण युधिष्ठिरेण मायाविनं कौरवं पराजेतुं मायाविनां चरितमेवाचरितम्। जयद्रथवधसमये भास्वन्तं सूर्यं स्वसुदर्शन चक्रेणाऽऽच्छाद्य भगवता श्रीकृष्णेनार्जुनाय जयद्रथस्य वधार्थं समय प्रदत्तः। श्रीकृष्णस्यामुना मायाविनाऽऽचरणेनार्जुनस्य जीवनं रक्षित जयश्रीश्च तस्मै प्रदत्ता। रामायणेऽपि वालिनं हन्तुमुद्यता रामेण कपट व्यवहारेणैव तस्य वधः सम्पादितः। अत एव दुष्टेषु मायाविषु च जनेषु मायिनः एव भवितुं श्रेयः। महाकविना भारविणा सम्यगेव प्रतिपादितं यत्—

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्
असंवृताङ्गा निशिता इवेषवः॥

भारतवर्षस्येतिवृत्ते बहूनि उदाहरणानि उपलब्धानि सन्ति यत्र शक्तिहीना मायिनः पुरुषा अमायिनो जनान् पराजित्य त्रि जयश्रियं लब्धवन्तः। मुहम्मदगोरी-नामको यवनराजः प्रसिद्धं पराक्रमिणम् वीराग्रगण्यम्, पृथ्वीराजं यत् पराजितवान् तत्किं स्वबलेन उताहोस्विद् वीरतया ? अथवा प्रभुत्वेन ? नहि नहि मायाविना आचरणेन कपट व्यवहारेणैव जयश्रीस्तत्समीपं गता। देशेऽस्मिन् सकलेऽपि संग्रामे अस्माकं पूज्यां गोमातरं संग्रामस्याग्रभागे स्थापयद्भिर्यवनैः कपट व्यवहारेणैव छलयुक्तेन मार्गेणैव सफलता प्राप्तेति प्रसिद्धमेव। तत्कालीन भारतीयाः सरलाः, धर्मप्राणाः, सत्यपरायणाश्चासन्। अत एव ते न कदापि मायिनां शासकानां कूटनीतिं ज्ञातुमशक्नुवन्। अतस्तेषां पराजयो निश्चित आसीत्। सत्यमेव सुभाषितमिदम्—"शठे शाठ्यं समाचरेत्।"

यथा कण्टकेनैव कण्टकं शोध्यते तथैव शाठ्ययुक्तेन व्यवहारेण शठस्य प्रतिक्रिया कर्तुं समुचिता। हिंसायाः प्रतिक्रिया हिंसयैव भवि

शक्नोति, न कदाप्यहिंसया। शठानां खलानाञ्च प्रतीकारस्तीक्ष्णदण्डेनैव भवितुमर्हति, न कदापि प्रार्थनया। उक्तं केनापि यत्—

"खलानां कण्टकानां वा द्विविधैव प्रतिक्रिया।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥"

भीषणात्याचारस्य प्रतिक्रिया क्रोधपूर्णेन कार्येणैव भवति, न कदापि शान्त्या। यो मनुष्यः क्रोधपूर्णस्य कार्यस्यावसरे शान्तिं धारयति तं सर्वे जना निन्दन्ति। शत्रुरपि तस्माद् भयं न प्राप्नोति "अमन्थ कोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न च विद्विषादरः ॥"

अतः क्रोधस्यावसरे क्रोधः प्रदर्शनीयः। यदि शत्रुः संग्रामे शस्त्रस्य व्यवहारं करोति, तदा शस्त्रमेव प्रयोक्तव्यम्, न सत्याग्रहः। ज्वलित-मग्निमिव प्रचण्डं पुरुषं शम्भुरपि नाभिभवितुं शक्नोति—

"ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः।"

आर्जवम्, नम्रता, दया, क्षान्तिः सर्वेऽमी गुणाः साधुजनैः सह व्यवहारेष्वेवोचिताः, न कदापि कुटिलेषु। कुटिलजनानां हृदयं न कदापि सद्व्यवहारेण प्रभावितं भवति। यथा प्रस्तरे चक्षुषाऽऽघातो निरर्थकः, तथैव दुष्टजनेषु साध्वाऽऽचरणं निष्फलमेव भवति। 'कण्टके-नैव कण्टकशोधनम्' इति पूर्वोक्तं सिद्धान्तं प्रतिपादयता आचार्येण तारस्वरेण डिण्डिमघोषेण च स्पष्टमेवोपदिष्टं यद् मायाविषु मायैव विधेया, न सद्व्यवहारः। यतः "आर्जवं हि कुटिलेषु न नीतिः।"

## १९. राष्ट्रभाषा संस्कृतम्

भारतवर्षस्य का भाषा राष्ट्रभाषा भवितुमर्हतीति विवादास्पदो: विषयः। देशस्यास्य विधान-परिषदा भाषेयं 'हिन्दी' इति समु घोषिता। विधान-परिषदि यदा विषयस्यास्याश्चर्चाऽऽसीत् त कतिपयैर्दक्षिणभारतीयैः शंकेयं समुपस्थापिता यत् तामिल-तेल प्रभृतिभाषानां साहित्यं हिन्दीसाहित्यापेक्षया समधिकं सम विद्यते। सन्ति ताः प्राचीनतराः, अत एव तामिलभाषैव राष्ट्रभा भवितुमर्हति। वंगदेशीयैः संसदसदस्यैस्तर्कोऽयं तदा समुपस्थापि यत् 'वंगला' भाषा ज्ञानविज्ञानविषयेषु प्रचुररूपेण समृद्धा विद्यते हिन्दीभाषाऽस्यास्तुलनायां न कोटिमप्यधिरोहति। बंगलाभाषाभाषि संख्याऽपि नास्ति स्वल्पा। बंकिमचन्द्ररवीन्द्रनाथकविपुङ्गवैः परिपालित भाषा भारतीयराष्ट्रीयजागरणस्य मूलभूता वर्तते, अतः कथन्न राष्ट्रभाषापदवीं प्राप्नोतु? समधिकवादविवादानन्तरं संसदसद रिदमेव स्वीकृतं यद् बहुविधकारणेन पदस्याधिकारिणी हिन्दीभाषै वर्तते, परन्तु भारतीयविधानपरिषदा राष्ट्रभाषारूपेण स्वीकृताप भाषा न बहुजनपरितोषाय विद्यते। मद्रासराज्ये अद्यापि हिन्दीभाषा अनिवार्यरूपेणाध्ययनाय विरोधो दृश्यते। तत्रत्या जना अस्याः भाषाय प्रभुत्वं स्वीकर्तुं नोद्यता सन्ति। बम्बईराज्ये तथा वंगदेशेऽपि नास्ति अस्याः समादरः। अतो विचारणीयोऽयं विषयो यदस्मिन् परिस्थि का भाषा राष्ट्रभाषापदमलंकर्तुमर्हति।

अस्माकन्तु निश्चितोऽयं सिद्धान्तो यत् संस्कृतभाषैव भार राष्ट्रस्य राष्ट्रभाषापदं प्राप्तुं समर्थाऽस्ति। इयं गीर्वाणवाणी न केव भारतवर्षस्य सकलासु भाषासु समधिकप्राचीनतमा; अपि तु संसारे स्मिन्न काप्यन्या भाषा प्राचीनतरा। अस्यां भाषायां सकलज्ञानविज्ञा विषयाणां रचना विद्यते। धर्मप्राणभारतवर्षस्य धार्मिका ग्रन्था अस्य मेव निबद्धाः सन्ति। अखिलधर्मस्य मूलभूताः भगवन्तो चतुरो वे

अपि अस्यामेव लिखितातीव शोभन्ते। भारतीयदर्शनानां रचनापि संस्कृतभाषायामेव विद्यते। वाणीयं भारतीयसंस्कृतेरक्षय्यो भण्डारः। अत एव भारतीयसभ्यताया संस्कृतेश्च रक्षणार्थमियमेव भाषा राष्ट्रभाषासिंहासनं समारोढुमर्हति।

राष्ट्रभाषायाः सर्वप्रथमोऽयं गुणो यत् सा सकलदेशवासीयैर्जनैर्बोधगम्या भवतु। अयं गुणः संस्कृतभाषायामेव वर्तते। देशस्यास्य यावत्यः भाषा सन्ति ताः सर्वाः संस्कृतभाषायाः प्रादुर्भूताः सन्ति। अत एव तासां शब्दावलिः संस्कृतप्रचुरा वर्तते। का नाम कन्या आर्यभाषाणाम्। दक्षिणादेशीया द्राविडभाषा अपि संस्कृतेन प्रचुररूपेण प्रभाविता विद्यन्ते। भारतस्य सुदूरप्रान्ते प्रचलिता 'मलयालम्' भाषाया अपि पदावलिः समधिकसंस्कृतमिश्रिता वर्तते। बंगलाभाषायाः त्रिचतुरोंशः पदावलिः संस्कृतमयः। संस्कृतमयी बंगलाकविता संस्कृतश्लोकाद् न भिन्ना दृश्यते। इयन्तु साहित्यस्य दशा विद्यते।

भारतवर्षस्यान्यभाषाणां लिपिरपि संस्कृत-(नागरी)-लिपेस्तुल्या। नास्ति भेदः संस्कृत-मराठी-गुजरातीलिपिषु। गुरुमुखीलिपिरपि नागरी तुल्या। एभिः कारणैर्यदि संस्कृतभाषा देशस्यास्य राष्ट्रभाषा समुद्घोषिता चेत् तर्हि महान् लाभः संजायते। भारतवर्षस्य सर्वाणि राज्यानि भाषामिमां सुखपूर्वकं राष्ट्रभाषां स्वीकरिष्यन्ति।

संस्कृतं भारतवर्षस्य धर्मस्य संस्कृतेश्च वाहकं विद्यते। यदि भारतस्यास्य प्राचीनसंस्कृतेर्धर्मस्य च रक्षा आवश्यकीयाऽस्ति, तर्हि गीर्वाणवाण्याः प्रचार आवश्यकः। ये खलु इदं कथयन्ति यत् हिन्दीभाषायाः साहित्यं स्वल्पं विद्यते अत एव नेयं राष्ट्रभाषापदवीं समारोढुं योग्या इति तेषां कथनमपि नोचितम्। संस्कृतसाहित्यविषये तु नेदं कथितुं शक्यते; यतोऽस्याः साहित्यं भारतवर्षस्य सर्वासां भाषाणामपेक्षयाऽतिप्राचीनं समृद्धञ्चास्ति। अस्यां ज्ञानं विज्ञानं सकलाः कलाः दर्शनञ्च विलिखितं विद्यते। प्राचीनकालेऽस्याः भाषायाः प्रचारः सुदूरपूर्वीयद्वीपसमूहेऽपि आसीत्। अधुनापि संस्कृतस्याध्ययनमध्यापनञ्च

यूरोप-अमेरिकाप्रभृतिदेशेषु भवति । अत एव भाषेयं न केवलं भारतस्य भाषा, अपि त्वन्तरराष्ट्रीया भाषाऽपि विद्यते। अनेनैव कारणेन डा० फाटजू-भीअणे महोदयैः सम्यगेव प्रतिपादितं यत् केवलं संस्कृतभाषैव देशस्यास्य राष्ट्रभाषा भवितुमर्हति। निश्चयेन विषयेऽस्मिन् नास्ति कस्यापि विवादः । वयन्तु भगवन्तमिदमेव प्रार्थये यत्—

"सरस्वती श्रुतिमहती महीयताम्"

## संस्कृतभाषाया अभ्युन्नत्यै अस्माकं कर्तव्यम्

अहोऽस्माकं कीदृशं दुर्भाग्यं वर्तते ? या भाषा समस्तभारतीयार्य-भाषाणां जननी आसीत्, या गैर्वाणवाणी अमरभाषेति साभिप्रायेण प्रसिद्धाऽऽसीत्, या न केवलमस्मिन् जगति, प्रत्युत स्वर्गेऽपि देवैरपि व्यवहृताऽभवत्, या न केवलं हिन्दूनां प्रत्युत बौद्धानां जैनानाम् सर्वप्रिया भाषाऽभूत्, सैव संस्कृतभाषाऽधुना 'मृता' इति कथ्यते। किं नैतच्चित्रं यत्पुरा पण्डितादिविरुदावलिभिर्मण्डिता अपि संस्कृताध्ययनशीला जनाः साम्प्रतम् आंग्लभाषाविद्भिः 'मूर्खाः' इति भाव्यन्ते। या संस्कृतभाषा पूर्वं लोकप्रिया सर्वश्रेष्ठा चासीत्, सैवाधुनातिनिकृष्टां दशामापन्ना। अस्या ज्ञातारोऽपि सहस्रेषु कतिपये सन्ति। किं बहुना, संस्कृतभाषायाः पठनमपि हेयदृष्ट्याऽवलोक्यते। इमामतिनिकृष्टां दशां प्राप्तां देववाणीं दृष्ट्वा कस्याऽऽर्यस्य न दूयते चेतः ? कस्याऽऽत्मा द्रवीभूतो न भवति ? कस्य हृदयं विदीर्णं न जायते ?

परन्तु संस्कृतभाषाया अवनतेः कारणं ब्राह्मणानामौदासीन्यमेवेति प्रतीमः। यदा गीर्वाणवाण्यभिमानिनो द्विजन्मान एव परित्यज्य मूलभाषामिमां राजभाषां सेवन्ते, तदा का कथाऽन्येषां जनानाम्। ब्राह्मणानां संस्कृतभाषाया आधुनिकमौदासिन्यमवलोक्य नितरां खिद्यते मानसम्। येषां जीविकाऽपि संस्कृतभाषाध्ययनमूलमेवालम्ब्यते, यदि तेऽपि संवर्धनेऽस्याः पराङ्मुखाः सन्ति तर्हि कं शरणं गमिष्यति वराकी गीर्वाणवाणीयम् ? संस्कृतभाषाया अपि कथं सम्भाव्यते कुशलम्,

यदस्या रक्षका ब्राह्मणा एव स्वताटस्थ्येन, औदासीन्येनाऽऽङ्गल-भाषासेवनेन चास्या भक्षका भवन्ति।

आर्यसंस्कृतेर्जीवनधारणाय, हिन्दूजातेर्जागरणाय च निम्नलिखितेन षट्प्रकारेण अस्याः समुन्नतिरवश्यं विधेया—

१. हिन्दूनां कृते निश्चयेन संस्कृताध्ययनम्।

२. संस्कृतभाषायाः प्रचाराय विद्यालयानाम्, महाविद्यालयानां विश्वविद्यालयानां च स्थापना।

३. अप्रकाशितपुस्तकानां प्रकाशनम्।

४. प्राचीन-पुस्तकानां सुलभानि संस्करणानि।

५. संस्कृतभाषायामाधुनिकविज्ञानसंबन्धिनो विषयानवलम्ब्य ग्रन्थरचना।

६. विदेशेषु संस्कृतभाषायाः प्रचारः।

(१) संस्कृतभाषायाः पठनं सर्वैरपि हिन्दुभिरनिवार्यरूपेण करणीयम्। वर्णानाम् आश्रमाणाञ्च भेदभावं परित्यज्य सर्वैरपि भाषेयं पठनीया। संस्कृतभाषा केवलं ब्राह्मणानां कृत एव नास्ति, प्रत्युताऽस्याः पठनस्याधिकारः सर्वेषां 'हिन्दू' इति नाम्नि परिगणितानां जातीनां विद्यते। अस्माभिः सर्वैरपि एका प्रतिज्ञा करणीया यद् वयं संस्कृतमवश्यमेव पठिष्यामः। विषयेऽस्मिन् ब्राह्मणानामधिकमुत्तर-दायित्वं वर्तते। उक्तञ्च महाभाष्यकारेण पतञ्जलिना यत्—

"ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च"

स्वप्राचीनां सभ्यतां संस्कृतिञ्च सम्यग् ज्ञातुं जना नियतमेव संस्कृतं पठेयुः। सर्वाङ्गीणोन्नतेर्मूलं निजा भाषैव विद्यते। यथोक्तं भारतेन्दुना हरिश्चन्द्रेण यत्—

निज भाषा उन्नति अहै, सब उन्नति को मूल।
बिन निजभाषा ज्ञान के, मिटत न जिय को शूल॥

(२) समयेऽस्मिन् संस्कृतशिक्षणसंस्थानां महानभाव इति नितरां खेदस्यावसरः। प्रान्तेऽस्मिन् आंगलभाषाया प्रचाराय प्रतिमण्डले (जनपदे) एकैको राजकीयः शिक्षालयो वर्तते, परन्तु संस्कृतभाषाऽध्यापनाय समस्ते मण्डले केवलमेक एव काश्यां राजकीयः संस्कृतविद्यालयो दरीदृश्यते। वयं संस्कृतभाषायाः प्रचाराय प्रतिप्रान्तम्, प्रतिनगरम्, प्रतिग्रामञ्च पाठशालानां स्थापनां कुर्याम्। तासु पाठशालासु संस्कृतविद्यार्थिनामुत्साहवर्धनाय छात्रवृत्तीनामपि प्रतिष्ठा कार्या। भारतस्य प्रधाननगरेषु महाविद्यालयानां स्थापना करणीया, यत्राऽऽगत्य छात्रा भारतीयधर्मार्थकामशास्त्राणां दर्शनानाञ्च सम्यग् अध्ययनं कर्तुं शक्नुयुः। अनेन विधिना प्रान्ते प्रान्ते, नगरे नगरे, ग्रामे ग्रामे संस्कृतभाषायाः प्रचारो भविष्यति। सर्वे ग्रामवासिनोऽपि भाषामिमाम् अल्पव्ययेन सुलभेन प्रकारेण च पठिष्यन्ति।

(३) संस्कृतभाषायां बहूनि हस्तलिखितानि पुस्तकानि विद्यन्ते, यानि नाद्यापि प्रकाश्यं नीतानि। संस्कृतभाषायां ईदृशानां पुस्तकानामेकं महद् विशालञ्च सूचीपत्रं जर्मनदेशीयेन 'औफ्रेक्ट' महोदयेन 'कैटेलोगुस कैठेलेगोरुम्' इति नाम्ना प्रकाशितम्। तस्मिन् महति सूचीपत्रेऽप्रकाशितपुस्तकानां संख्यां दृष्ट्वा निश्चितमेव ज्ञायते यत् संस्कृतभाषायाः पुस्तकभाण्डागारो महान् वर्तते। श्रूयते यद् गुर्जरदेशे राजपूतानामण्डले च जैनपुस्तकभाण्डारे संस्कृतस्य बहून्यप्रकाशितानि पुस्तकानि सञ्चयीकृतानि सन्ति। यदि तानि पुस्तकानि प्रकाशितानि भवेयुस्तर्हि नूनं संस्कृतवाङ्मयं सुबृहद् महत्त्वपूर्णञ्च भवेत्। अत एव तेषां पुस्तकानां प्रकाशनमस्माकमतीवाऽऽवश्यकं कर्तव्यं विद्यते।

(४) प्राचीनपुस्तकानां सुलभसंस्करणानां प्रकाशनमपि परमावश्यकं विद्यते। सुलभसंस्करणं विना ग्रन्थरत्नान्यपि लोकप्रियतां विख्यातिं च न प्राप्नुवन्ति। भगवन्तो वेदा अस्माकं धर्मस्य मूलभूताः सन्ति। उक्तञ्च 'वेदोऽखिलो धर्ममूलम्' इति परन्तु तेषां सुलभसंस्करणेन विना बहवो जनास्तान् द्रष्टुं पठितुं चासमर्थाः सन्ति। अनेके पण्डितम्मन्यमाना विद्वांसोऽपि वेदानां सुलभप्रचारा-

भावात् तेषामध्ययनात् विरहिताः तिष्ठन्ति। महाभारतस्य वाल्मीकि-रामायणस्यापीयमेव दशा वर्तते। समधिकमूल्यस्य कारणेन निर्धना जनास्तानि क्रेतुं न शक्नुवन्ति। अल्पमूल्येन प्रकाशितस्य पुस्तकस्य समधिकः प्रचारो भवति। अत एव वेदानाम्, उपनिषदां, पुराणेतिहास-दर्शनग्रन्थाणाञ्चाल्पमूल्येन प्रकाशनं नितान्तं श्रेयस्करम्।

(५) साम्प्रतं भौतिकरसायनादिविज्ञानानामध्ययनमैहिकसमुन्नतेः कारणरूपं भजत इति नापरोक्षं विपश्चिताम्। परन्तु विषया-निमानवलम्ब्य न दृश्यन्ते संस्कृतभाषाया निबद्धाः प्रभूततराः ग्रन्थाः। यदा ग्रन्थानामेवाभावस्तदा कथंकारं छात्रा विषयेष्वेतेषु नैपुण्यभाजो भविष्यन्ति।

(६) न केवलं भारतेऽस्मिन् वर्षे परन्तु भारतेतरेष्वपि वर्षेषु देववाण्याः प्रचारो भृशमुद्योगं स्वीकृत्यापि नूनं विधेयः। येन देवैरपि पूजितैषा भाषा सर्वत्र व्याप्तिं ख्यातिञ्च समाप्नुयात्।

## २०. आधुनिका संस्कृत-पठन-पाठन-प्रणाली

संसारेऽस्मिन् सर्वाणि वस्तूनि समये समये संस्कारमर्हन्ति। संस्कारेण विना सर्वेषां वस्तूनां स्वरूपं विकृतं भवति। यथा कोऽपि प्रासादः संस्काराभावात् कतिपयवर्षानन्तरं विकृतिं भजते, तथैव शिक्षण-प्रणाली अपि समयोचितवर्तनेन विना विकृता दूषिता च जायते। आङ्गलभाषाशिक्षाप्रणाली तु समये समये समयोचितेन परिवर्तनेन परिवर्धनेन च कमपि जनानामुपकारमादधाना दृश्यते, परन्तु संस्कृत-भाषायाः शिक्षणप्रणाली शोभनं परिवर्तनमन्तरेणाऽसंस्कृता संजाता। अस्याः भाषायाः या पाठनप्रणाली प्राचीनकाले आसीत्, सैवाविच्छिन्न-रूपेणाऽधुनापि वर्तते। तस्यां प्रणाल्यां किमपि परिवर्तनं न केनापि कृतम्। देशे काले च महापरिवर्तनं सञ्जातम्, परन्तु संस्कृतशिक्षण-प्रणाली साम्प्रतमपि सैव वर्तते। प्राचीनायाः प्रणाल्या औचित्यं विचिन्तयन्तो मर्यादारक्षणधुरीणाः केचन पुरुषा अस्यां प्रणाल्यां न परिवर्तनं सहन्ते, परन्तु तेषां मतमिदमसमीचीनम्; प्राचीनमपि वस्तु यदि दोषयुक्तं विद्यते तर्हि तस्याः संस्कारः त्यागो वा एव श्रेयस्करः।

> तातस्य कूपोऽयमिति ब्रुवाणाः
> क्षारं जलं काः पुरुषाः पिबन्ति।

ईदृशानामेव प्राचीनाऽन्धपरम्पराभक्तानां कारणात् संस्कृतपाठन-प्रणाली साम्प्रतमपि संस्काररहिता विद्यते। अस्यां शिक्षणप्रणाल्यां बहवो दोषाः समायाताः सन्ति, येषां दूरीकरणं संस्कृतभाषारक्षणाय तीवाऽऽवश्यकं विद्यते।

पाठशालासु प्रथमं कोमलबुद्धिसमन्वितेभ्यो बालकेभ्यो महाकठिनो ग्रन्थः 'लघुकौमुदी' पाठ्यते। ते तु दयनीया बालका प्रतिदिनम् प्रति-मासम्, प्रतिवर्षम् 'टिड्ढाणयद्वयसजदघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः', 'खफछठथ्', 'लण्', 'नेर्गदनदपद०', 'झलां जश् झशि' इत्यादीनि बहूनि

सूत्राणि शुकवद् घोषयन्तोऽपि न किमप्यधिगच्छन्ति—सरलस्य वाक्यस्य संस्कृते केन प्रकारेणानुवादो भविष्यति। उत्तीर्णो मध्यमापरीक्षोऽपि छात्रो व्याकरणस्य नियमान् जानन्नपि तेषां प्रयोगं न जानाति। सर्वा अपि भाषा साहित्यमुखेन पाठ्यन्ते, अर्थात् प्रथमं सरलवाक्यसमन्वितं पाठ्यपुस्तकं पाठ्यत। यदा भाषायां बालकानां प्रवेशो भवति तदैव व्याकरणं पाठ्यते; परन्तु हा हन्त! संस्कृते भाषाशिक्षणपूर्वादेव तस्याः व्याकरणं शिक्ष्यते। भाषा साध्या तस्याः व्याकरणञ्च साधनं वर्तते। व्याकरणरूपं साधनं न कदापि साध्यस्य स्थानं ग्रहीतुमर्हति। अत एवाऽस्माकं मते तु प्रथमं बालकेभ्यः संस्कृतसाहित्यस्यैव पाठनं समीचीनमस्ति। यदा तेषां साहित्ये प्रवेशो भवति तदैव व्याकरणस्य पाठनं युज्यते। अनयैव प्रणाल्या साहित्यमुखेन अध्यापनं श्रेयस्करं देववाण्या इति नो विश्वासः।

संस्कृतशिक्षणे द्वितीयो दोषो नवीनशिक्षण-सिद्धान्तानां प्रचाराभावो वर्तते। अधुना भाषाशिक्षणपद्धतौ नवीनैः शिक्षणसिद्धान्तैर्महत् परिवर्तनं समुपस्थापितव्यम्, येषामवलम्बनं कृत्वा तेभ्यः शिक्षा प्रदीयते। तेषु डाइरेक्ट मेथड, डाल्टन प्लान, मान्टेसरी सिस्टम, वर्धास्कीम तथा किण्डर-गार्डन-प्रणाली च प्रधानाः सन्ति। अयमेवोद्देश्यः आसां प्रणालीनां यद् बालकानां बुद्धिविकासनार्थं प्रचुरोऽवसरः प्रदातव्यः। क्रीडाक्षेत्रे, नदीपुलिने, वाटिकायाम्, विहारस्थाने च तेभ्यो मनोरञ्जनेन समन्वितं पाठनं विधेयम्। न कदापि तेषां बुद्धिः, सुकुमारञ्च हृदयं पाठ्यग्रन्थभारेण उच्छेदपदवीं नेतव्ये।

संस्कृत-शिक्षणपद्धतौ तृतीयो दोषः सामयिकविषयाणां पाठ्यग्रन्थेषु समावेशाभावः। अधुना भूगोलेतिहासविज्ञानादीनां सर्वेषां विषयाणां साधारणं ज्ञानञ्चापेक्षितं विद्यते। क्वास्ते कौरवपाण्डवानां महतः संग्रामस्य क्रीडास्थली कुरुक्षेत्रम्, क्व तिष्ठति भगवता श्रीकृष्णेन स्थापिता पुरी द्वारिका, क्व च वर्तते अहिंसासिद्धान्तप्रतिपादकस्य शाक्य-मुनेर्बुद्धस्य जन्मस्थली कपिलवस्तु, क्व निवसन्ति स्म समरविजयिनो गुप्तराजान इति संस्कृताध्येतॄणामगम्योऽयं विषयः। किं बहुना, केचन

संस्कृतपण्डिता इदमपि न जानन्ति यत् कदाऽभूत् संस्कृतव्याकरणास्य प्रतिष्ठापको महर्षिः पाणिनिः, कदाऽऽसीत् कविकुलकुमुदकलाधरः कालिदासः, कदाऽभवद् नैषधीयचरितस्य कर्ता श्रीहर्षः ? विज्ञानविषये तु तेषां ज्ञानमत्यन्ताभाव इति विशेषणं लभते। ते तु विद्युत्टेलीफोन-वायुयानरेडियोवायरलेसेत्यादिविषयाणामाविष्कारसिद्धान्तैर्नितान्तमपरिचिताः सन्ति। यदि दशेयं पूज्यानां संस्कृतविदुषां वर्तते तर्हि का कथा तेषां छात्राणाम् ? ते तु सामयिकविषयज्ञानपराङ्मुखाः शुकवद् घोषणपरायणाः स्वपाठान् तारस्वरेण रटन्तस्तिष्ठन्ति। तेषां छात्राणां कृते राजनीतिचर्चा घृणाविषयः, समाचारपत्रपठनं निरर्थकम्, स्वदेशस्येतिवृत्तज्ञानं तिरस्कारपात्रम्, भूगोलविद्या प्रयोजनरहिता, विज्ञानं च ज्ञानविवर्जितं विद्यते। सामाजिकविषयाणामेषामुपेक्षाया अयं विषमः परिणामोऽभूद् यत् संस्कृतपण्डिताः छात्राश्च लौकिकज्ञानशून्याः सञ्जाताः।

अयमप्यपरो दोषो वरीवर्ति यदेते संस्कृताध्ययनशीलाश्छात्रा अधीत्यापि व्याकरणम्, पठित्वापि विविधानि काव्यनाटकादीनि नेदं जानन्ति यद् निबन्धरचनेन भाषाज्ञानं नैपुण्यं भजते। शुद्धं वाक्यमेकमपि न लिखितुं ते जानन्ति, नापि वक्तुं पारयन्ति। आधुनिकसंस्कृत-परीक्षणपद्धतिं दोषा एते भृशं दूषयन्ति। यावन्नैषां परिहारः क्रियते तावन्नेयं पद्धतिः कमपि कामं दोग्धुं प्रभवति, न च व्यवहारज्ञानाय कथमपि कल्पत इति नूनमस्माकं विश्वासः।

## २१. संस्कृतकाव्येषु प्रगतिशीलत्वम्

केचन आधुनिका आलोचनाविदो वदन्ति यन्न विद्यते संस्कृतनिबद्धेषु काव्येषु प्रगतिशीलत्वं नाम। प्रगतिशीलत्वस्य स्वरूपनिर्णयावसरे ते इत्थं मीमांसन्ते यत् समाजस्थनिम्नश्रेणीगतानां दारिद्र्यपंकमग्नानां जनानां यत्खलून्मीलयति सामाजिकदृष्ट्या सर्वतो गर्हप्रायं जीवितं तस्य यथार्थतश्चित्रणं काव्येषु, संवादादितत्त्वयोजनया यभिरूपणं नाटकेषु, तदेव काव्यस्थप्रगतिशीलत्वस्य जीवातुः। साम्प्रतं रूसदेशस्थ साहित्यस्य वैशिष्ट्यमिदमेव सर्वतो जागर्ति यच्छ्रमि[illegible]णां परिश्रमोपजीविनां जनानां यथार्थवादमनुसृत्य जीवनचित्रणं नाम। इमे आलोचकम्मन्या अनभिज्ञाः संस्कृतकाव्यकलापानां केवलं दोषैकपक्षपातिनः परप्रत्ययनेय-बुद्धयो हन्त यत्खलूद्गिरन्ति तत्तु नितान्तं भ्रान्तिपूर्णत्वात् सुतरां नास्त्यनवद्यमिति विद्वांसो विदांकुर्वन्तु विवेचनचणाः।

प्राचीनभारतेऽस्मिन् धनाढ्यानां मान्यानां महीभुजामन्येषां वा लक्ष्मीपुत्राणां सदनं वैदुषीमण्डितानां पण्डितानां प्रतिभाजुषां कवीनां वा कृते सत्यमेवावर्तताऽऽकर्षणकेन्द्रमिति के खलु न जानन्ति। राज्ञामाश्रयस्तेषां विधाय भोजनादिव्यवस्थां चिन्ताया ह्रासकोऽभवदिति त्वकिञ्चित्करी धारणा साम्प्रतिकानामालोचकानाम्। कवीनां प्रतिभाप्रसारणाय पण्डितानां पाण्डित्योद्बोधनाय च समृद्धानामाश्रयस्योपयोग आसीत् प्राचीने युगे। दैहिकचिन्तायाः शतगुणी विद्यते मानसिकचिन्ताया निवृत्तिरिति हेतोर्विद्वांसो भूपालानामाश्रय-कल्पतरूणामाश्रयणं सर्वथा चक्रुः। न तेन कापि हानिरभूत्। कवीनां स्वाश्रयप्रदातॄणां नृपाणां कीर्तिकीर्तनं नाम न खलु तेषामावश्यकं कार्यमभवत्। अवान्तरकालीनाः केचन कवयः स्तुवन्तु कृपाप्रदर्शनकारिणः कांश्चन महीपालान्, परन्तु प्राचीनानां कवीनां नेयमासीत् पद्धतिरवद्या, नायमासीत् क्षुद्रजनक्षुण्णो मार्गः। स्वाच्छन्द्यप्रिया हि निरंकुशाः

कवयः सकलजनहिताय कुर्वन्तः कविकर्म नो कदाऽपि समाजस्थ-पुरुषान् हीनान् वाऽदीनान् वा, उच्चान् वा, नीचान् वा विसस्मरुः। तेषां भारती सर्वेषां वर्गाणां कल्याणाय प्रवर्तमानैव स्वीयां कृतार्थतां भेजे। उदाहरणप्रदर्शनमुखेन प्रदर्श्यते देववाणीरचनाचणानां पण्डितानामेतद्विषयिका काचन काव्यचातुरी।

श्रूयते हि राज्ञा भोजेनानर्घोपायनैः सादरं सत्कृतो माघकविः श्रीमालनगरे विक्रमस्याष्टमशतके स्वाभिनवं 'लक्ष्मीपतेः कीर्तनमात्रचारु' रुचिरं महाकाव्यं शिशुपालवधाभिधानं प्रणिनिनाय। तत्काव्यविमर्शो हि ध्रुवमेव तस्य साधारणजनानां जीवनविषयेऽप्यवधीयमानां दृष्टिं साक्षात् स्फुटीकरोति। एकादशसर्गस्थं प्रभातवर्णनमेवैतदुपोद्बलकं प्रमाणरूपेणोपस्थापयितुं शक्यते। प्रभातवर्णनेऽस्मिन् महीपालानां वर्णनपरोऽपि कविः प्रजावर्गं नैव विस्मरति। राजप्रासाददत्तदृष्टिरपि माघो दरिद्राणामुटजेषु स्वां दृष्टिं निक्षिपत्येव। प्रभातकाले प्रहरनिदर्शनपराणां पुरुषाणां चित्रणमेतन्न खलु यथार्थतया समीचीनम्, अपि तु नूतनवस्तुप्रदर्शनेन पाठकानां हृदयाऽऽवर्जकमपि भवति—

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति।
मुहुरविशदवर्णा निद्रया शून्यशून्यां
दददपि गिरमन्तर्बुध्यते नो मनुष्यः॥

(शिशुपालवधे ११।४)

कवेः सहानुभूतिर्न केवलं मानवेष्वेव सीमबद्धं वर्तते, प्रत्युत स खलु कविः तिरश्चां पशूनां च व्यवहारस्यावलोकने नितान्तं पटुर्दक्षश्च वर्तते। धान्यपालिकानां गोपीनां मृगजन्यबाधयेतो धावन्तीनां शुकादितः क्षेत्ररक्षायै ततो व्याकुलानां च निरीक्ष्य विषमां विस्मयनीयां स्थितिं के खलु पाठका आनन्दनिर्भरा न प्रशंसन्ति सूक्ष्मनिरीक्षणचातुरीं महाकवेर्माघस्य। दृश्यतां रुचिरं दृश्यमेतत्—

स व्रीहिणां यावदपासितुं गताः
शुकान् मृगैस्तावदुपद्रुतश्रियाम्।
कैदारिकाणामभितः समाकुलाः
सहासमालोकयति स्म गोपिकाः॥

(शिशु० १२।४२)

श्रीमान् माघकविः स्वमहाकाव्यस्य द्वादशे सर्गे जनपदनिवासिनामनेकान् ग्रामीणाचारान् सरलान् सरलया दृशा निरीक्ष्य कोमलया संस्कृतगिरा साधु वर्णितवान्। लज्जावनतमुख्यो नार्यो ग्रामीणाः श्रीकृष्णं वाटिकोपरोधसमर्थानां वृतीनां विवरमध्येनैव साक्षात्कुर्वन्ति। गोणीभारावनतपृष्ठाः क्रमेलका इतस्ततो धावन्तो भारमसहमाना राजमार्गेषु विस्तृतेष्वपि जनसमूहं सम्मर्द्य भीषयन्ति बालान् तन्मातृश्च। ग्रामाणां सीमान्तरेषु पानगोष्ठीमध्यगता गायका मधुपानमास्वदन्तः कमप्यानन्दमावहन्तीति वर्णयन् कविरयं कथं सामान्यजनताया दुःखसुखयोर्निरपेक्षभावमाधत्ते। तस्मात् पूर्वोक्ता अभियुक्तानां गिरो नितान्तमुपेक्ष्या एव।

भारविकविः पल्लवनरेशानामाश्रयमावहन् तत्सभ्योऽपि ग्रामाणां सुन्दराणि दृश्यानि वर्णयितुं तद्वासिनां च यथार्थतया जीवनं चित्रयितुं पारयतीति के खलु काव्यविदो न विदाङ्कुर्वन्ति। किरातार्जुनीयस्य चतुर्थसर्गस्थं वर्ण्यं वस्तुजातमस्मिन् स्थले दृष्टान्तरूपेणोपस्थापयितुं पार्यते। गोपानां वर्णनप्रवणमिदं पद्यं ध्रुवमनुसन्धेयं विद्वज्जनैः—

गतान् पशूनां सह जन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः।
ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्जवे॥

(किरात ४। ३)

महाकविः कालिदासो विक्रमादित्यसभारत्नमपि दरिद्राणां दयनीयां स्थितिं धनाढ्यानां चानन्दभरतुन्दिलां दशां स्वकाव्येषु ग्रन्थार्थरूपेण-नेकशो वर्णयति। एकलस्य मेघदूतकाव्यस्यानुशीलनमेव तद्वर्णन-पद्धतिमाविष्कर्तुं ध्रुवं क्षमते। नहि मेघदूतं कस्यचिद् विशालवैभवो-ल्लसितहृदयस्य महीपालस्य विरहवर्णनानिपुणं काव्यम्, अपि तु विपुलविभवशालिनो राजराजस्य कुबेरस्य कोपभाजनभूतस्य कस्यचन दीनस्य तत्सेवकस्य यक्षस्यैव विषमवियोगविश्लेषणपरं कविकर्मेति ध्रुवं जागर्ति तस्य महनीयं किमपि वैशिष्ट्यम्। स्वस्वामिनः शाप-मनुभूय स्वगृहात् प्रेमभरालसायाः स्वपत्न्याश्च दूरीकृतोऽयं यक्षः करालकरालां वेदनाततिमनुभवन् स्वजीवनं यापयतीति तद्वर्णनपरोऽयं महाकविः काम्पि दीनजनेषु स्वीयां सहानुभूतिमाविष्कुर्वन् कस्य दृष्टिपथं नावरति—

सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद् दुःखदुःखेन गात्रम्।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा॥

(उत्तरमेघे ३० श्लो०)

पद्येऽस्मिन् कविर्यक्षपत्न्या नितान्तं क्लान्तमात्मानं वर्णयति। विरहजन्यदौर्बल्यात् तस्या अबलात्वं साध्वनुमातुं शक्यते। दुर्बलतया-ऽऽभरणानां भारमसहमानया तया भूषणानां संन्यास एव व्यधायि। शय्योत्सङ्गे निहितमित्यत्र किमपि मधुरं व्यनक्ति महाकविः। गात्रं केनापि निहितं स्थापितं वर्तते, न तु सा स्वयं स्थापयितुं पारयति। यदि शय्यायाः पार्श्वे निहितं गात्रं स्यात् तदा भूम्यामधः पातः संभाव्येत। एतदमङ्गलजननीं संभावनां दूरीकर्तुकामः कविर्गात्रस्य स्थितिं शय्याया उत्सङ्गे मध्ये वर्णयति। शय्याया मध्ये स्थितं गात्रं यक्षपत्नी भूमौ पतितुं कथमपि न क्षमते। एवंभूतमपि गात्रं असकृदने-

कृशो दुःखं दुःखेन दुःखप्रकारेण कथमपि धारयतीत्यहो दौर्बल्यस्य कार्श्यस्य च पराकाष्ठा। तस्या दशादर्शनेन तव हृदये कारुण्यस्योद्भेद एव न भविष्यति, प्रत्युत सा यक्षपत्नी स्वत एव कार्श्यस्य परां कोटिमावहन्ती त्वामश्रुमोचनाय च प्रेरयिष्यति। अत्र कविः शोभनयाऽभिव्यञ्जनया यक्षपत्न्याः कामपि नितान्तं दयनीयां दशां सचेतसामग्रेऽभिव्यनक्ति। रसपेशलं भावुकतामण्डितमिदं चित्रं न कस्याश्चन महिष्या दशावर्णनपरतयोपन्यस्तं कविना, अपि त्वत्यन्तं सामान्यकोटिमनुभवन्त्या यक्षपत्न्याः। इत्थं राज्ञो विक्रमादित्यस्य सभायां समृद्धायां दिवसं यापयन्नपि कविर्नो पारयति दीनान् जनान् विस्मर्तुम्। इत्थं विषयजातं विचार्यैवाऽऽचार्यैरुदघोषि—

> न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
> जायते यन्न काव्याङ्गमहो भारो महान् कवेः॥



## २२. न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते

अस्मिन् जगति मनुष्याणां जीवनं दृढप्रेमरज्ज्वा बद्धं दृश्यते। यदा संसारे प्रेम न स्यात् तदाऽस्माकं जीवितं दुःखमयं नीरसञ्च जायेत। प्रेम्णो दृढभूमावेवास्य स्थितिः। संसारे या शान्तिः, आनन्दोल्लासः, परोपकारिता च दृश्यते तस्य मन्त्रः प्रेम एवास्ति। पुत्रो येन कारणेन पितुर्हृदयमाकर्षति, कान्ता येन हेतुना रसाकुलया दृष्ट्या प्राणवल्लभं पश्यति, प्रियानुरागी जनो येन प्रयोजनेन स्वप्राणादपि गरीयस्याः वल्लभायाः निर्निमेषं दर्शनमिच्छति, विरहविधुराणि हृदयानि येन विधिना प्राणान् धारयन्ति, प्रियजनवियुक्ता जना यं हृदये निधाय दिवसं क्षपाञ्च क्षपयन्ति, तदेव मानवजीवनतरोर्बीजभूतं वस्तु प्रेमाभिधानं नाम।

'प्रेम्णो विचित्रा गतिः' इति यदुक्तं पूर्वाचार्यैस्तदतीव समीचीनम्। प्रेम्णो महिमा न केवलं मनुष्येषु, परन्तु पक्षिषु, चतुष्पदेष्वपि दृश्यते। किं कारणं निदाघदिवसेषु भ्रमन्ती मृगी लुब्धकस्य जालमापतति? तस्याः संगीतप्रेम एव तां लुब्धकवागुरायां प्रक्षिपति। केन प्रयोजनेन मेघैर्मेदुरमम्बरमालोक्य मयूरा निजकार्यं परिहाय नर्तनसंलग्ना भवन्ति, कोऽर्थः प्रेमिजनानामग्रणीः चकोरः सुधांशुबिम्बं निमेषदरिद्रया दृष्ट्याऽवलोकयति। किं कार्यं कोमलकलेवरा कुमुदिनी विहाय निजवासरनिद्रां स्वपक्ष्मचक्षूंषि उन्मीलयति? केन लाभेन तीक्ष्णदीधितेः समुदयकाले पल्लवरागताम्रा कमलिनी स्वोन्मेषं प्राप्नोति? केन हेतुना स्वातिबिन्दु-जलाभिलाषुकश्चातको रटन् रटन् स्वकण्ठं शोषयन्नपि नान्यं जलं पिबति? केन कारणेन दिवसावसानसमये स्ववत्सायोत्सुका गौः द्रुततरजवेनागच्छति? सर्वत्र प्रेम्ण एव विचित्रा गतिः साक्षात् क्रियते।

येन प्रेम्णा सकलोऽपि जीवलोको बद्धो दृश्यते, किं तस्य स्वरूपम्, कुत्र तस्याश्रयः, कथं वा तस्योत्पत्तिरित्यस्माकं जिज्ञासा समुपजायते, परमतत्त्वमतीव सूक्ष्मं विद्यते। अतस्तस्य सम्यग् विवेचनं न पार्यतेऽ-

स्माभिः। परमतत्त्ववदिदमपि इन्द्रियागोचरं विद्यते। अस्य सत्ता तु वर्णयितुं न शक्यते, प्रत्युत सहृदयैः पुरुषैरेवानुभवस्य क्रियते विषयः। प्रेम द्विप्रकारकं कथ्यते—शुद्धमशुद्धञ्च। अशुद्धं प्रेम तद् यत्स्वार्थयुक्तं भवति। किमपि प्रयोजनं स्वार्थं वाऽवलम्ब्य यत् प्रेम क्रियते तदेव अशुद्धं स्वार्थसहितं प्रेम, यत् काम इति व्यवह्रियते विज्ञैः। केचन जनाः सौन्दर्यवशगाः कामपि परमरमणीयां सुन्दरीं स्वलोचनदर्शनातिथिं कुर्वन्ति। अन्ये च रतिभोगलोलुपा विजने वने स्त्रीरत्नं प्राप्य निर्निमेषदर्शनेन, मधुरभाषणेन च स्वप्रेमाङ्कुरं प्रकटीकुर्वन्ति। अपरे स्वलोचनतृप्त्यर्थमेव तासामालोकनं कुर्वन्ति। इयं परम्पराऽतीव दूषिता कथ्यते, यतोऽस्या मूले स्वार्थ एव बीजभूतेन निहितो विद्यते। द्वयोः कामिनोर्यत्प्रेम तदशुद्धमेव, यतस्तस्य हेतुर्भोगलिप्सा वर्तते। स्वार्थसहितं प्रेमाधिकदिनावसायि न भवितुमर्हति। भोगेच्छायाः समाप्तौ तस्यापि नाशो भवति। वयसः पतने रूपे वा विकृतिमुपजाते इदं क्षणभङ्गुरं प्रेम कर्पूरवद् नश्यति।

कालिदासस्य 'शकुन्तलायाम्' 'शकुन्तला-दुष्यन्तयोर्यत् प्रथमं प्रेम तत् शकुन्तलारूपलोभजातमेव वर्तते। अत एव दुष्यन्तेन अनार्याचरणादूर्ध्वं न स्मर्यते शकुन्तला। मध्यकालीनराजपूतराजानां यद् बहुपत्नीकेन वर्तनमासीत् तत्सर्वं भोगलिप्सया एव। अत एव न तेषां मध्ये कोऽपि आदर्शप्रेमी बभूव।

परन्तु यत् शुद्धं स्वार्थरहितं प्रेम तत्तु सर्वदा एकरसम्, एकरूपं भवति। तत्र स्वार्थस्य लेशोऽपि न वर्तते। तत्र कस्यापि प्रयोजनस्याऽत्यन्ताभावो भवति। तस्मिन् नायिकानायकयोः प्रेम्णि चित्तं शुद्धम्, निर्मलं दृश्यते। यत्तु स्वार्थरहितं प्रेम तत्तु वयसः पतनेन, सौन्दर्यनाशेन, कुचकाठिन्यशैथिल्येन, अपरस्त्रीलाभेन वा कदाऽपि विकृतिं न प्राप्नोति।

शुद्धं प्रेम तदेव यल्लब्धावसरमपि परिवर्तनं न प्राप्नोति। अस्माकं कविकुलभूषणेन महाकविना भवभूतिना शुद्धप्रेम्णो यत्स्वरूपं चित्रितं तदतीव समीचनं वर्तते। कथितं हि तेन—

अद्वैतं सुखःदुखयोरनुगुणं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।

कालेनावरणात्ययात् परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥

इदमेव ही शुद्धस्य प्रेम्णः स्वरूपम् । इदं प्रेम सुखे दुःखे च समानं भवति । बालतरुणवृद्धावस्थासु एको रसो विद्यते । न केनापि कारणेनास्मिन् विकृतिरुत्पाद्यते । इदं शुद्धं प्रेमास्मिन् जगति केनापि विरलेन पुरुषेणैव प्राप्यते ।

'प्रीतयः संश्रयन्ते' श्लोके या प्रीतिरुक्ता सैव शुद्धं प्रेम । इदं प्रेम स्वार्थरहित्वात् , रूपलोभाद्यभावात् , भोगलिप्साविनाशाच्च बहिरुपाधीनां सौन्दर्यादिगुणानां नावलम्बनं करोति । अस्य समुत्पादने बाह्या गुणा न कारणीभूता भवन्ति । न केनापि बाह्याकर्षणेनेदं जन्यते; प्रत्युत अस्योत्पादने किमपि आभ्यन्तरमनिर्वचनीयं वस्त्वेव कारणीभूतं भवति । कुमुदिनी यन्निशानाथेन सहोदयं प्राप्नोति तत्र को बहिरुपाधिः ? न कोऽपि; कमलिनी सवितुर्मृदुकरेण स्पृष्टा यन्निजां दीर्घनिद्रां त्यजति तत्र को बाह्यो हेतुः ? यत् चकोरो निमेषशून्यं शीतांशुमवलोकयति तत्र कः स्वार्थः ? न तत्र कोऽपि लौकिको लाभः ?

यः प्रेमिहृदयावर्जको हेतुः स कोऽपि आभ्यन्तरः, न बाह्यः । बाह्यावस्थानाशेऽपि प्रेम्णो विनाशाभावात् । निर्जीवपदार्थानामपि मध्ये यत्प्रेमकारणं तदपि आभ्यन्तरमेव । तत्केनापि न निर्णेतुं शक्यते । कीटानां दीपज्वालायां स्वजीवननाशोऽपि केनापि आभ्यन्तरकारणेनैव भवति । अत एव सुन्दरमुदीरितं तत्रभवता भवभूतिना यत्—

व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः ।
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ॥

अन्यच्च—

क्वेन्दोर्मण्डलमञ्जिनी क्व च रविः पद्माकरः क्व स्थितः
क्वाभ्राः सन्ति मयूरपंक्तिरमलाः क्वालिः क्व वा मालती ।
हारं प्रस्थितहंसवृन्दमनसो क्वासौ सरो मानसं
यो यस्याभिमतः स तस्य निकटे दूरेऽपि सन् वल्लभः ॥

## २३. सर्वे क्षयान्ता निचयाः

जगत्यस्मिन् यत्किञ्चिद् वस्तु दृश्यते तत्सर्वं मायायाः प्रपञ्च एव। न किमपि वस्त्वत्र स्थिरतां भजते। यानि वस्तूनि अस्माकमद्य चक्षुर्विषयतां प्राप्नुवन्ति तेषां स्थितिरपि क्षणिकैव। जलबुद्बुदवत्, तरङ्गिणीतरङ्गवत्, सन्ध्याकालीननभोलौहित्यवच्च भवति सर्वेषां सांसारिकवस्तूनां दशा। यदि वयमिमं संसारम् 'धर्मशालाम्' मन्यामहे तर्ह्यत्र न कापि अत्युक्तिः भवेत्; यथा विभिन्ना मनुष्या विभिन्नस्थानेभ्य आगत्य कतिपयकालं धर्मशालायामुषित्वाऽन्यैर्जनैः सह स्वाभिलषितं स्थानं गच्छन्ति, तथैव मनुष्याः स्वकर्मानुसारेण संसारेऽस्मिन् जन्म लब्ध्वा स्वकर्तव्यानि कृत्वा पुनरपि स्वकर्मानुसारेण लोकान्तरं प्राप्नुवन्ति। संसारेऽत्र या समुन्नतिः, यो धनसंचयः, यः संयोगश्च दृश्यते सर्वेषामेषां नाशो निश्चित एव। इदमेव विस्तरेण स्पष्टं क्रियते। यदत्र सर्वेषां वस्तूनां क्षणभंगुरा स्थितिः वर्तते इति नितान्तं तथ्यम्। अस्मिन् जगति कस्यापि मनुष्यस्य धनसंचयः चिरस्थायितां नो व्रजति। क्वास्ति बन्दीकृतकुबेरस्य, अपहृतपुष्पकविमानस्य, महाप्रतापिनो दशाननस्य अतुला धनसम्पत्तिः, यस्य राजधानी लंका नगरी अपि सुवर्णनिर्मिताऽऽसीत्? क्व विद्यते यक्षराजस्य महाराजस्य कुबेरस्य असंख्यं धनम्, यस्य गणनाऽपि गणितशास्त्रेण कर्तुमसक्याऽऽसीत्? क्व निहितोऽस्ति त्रिभुवनविजयिनां दशरथादिराजानां राजकीयः कोशः? महाराजाधिराजस्य धाराधिपस्य भोजस्य क्व गतः स निखिलो धनराशिः, यः कविभ्यः प्रत्यक्षरं लक्ष-प्रदानेनापि निःशेषतां न कदापि प्राप्नोत्? निश्चयमेते करालकालस्य मुखगह्वरे ग्रासरूपतां प्राप्ताः। श्रूयते हि यद् मुगलकाले 'शाहजहाँ' नाम्ना प्रसिद्धस्य भूपतेः कोशे महान्ति रत्नानि, बहूमूल्यानि आभूषणानि, सुवर्णादीनि च आसन्; परन्तु कुत्र तेषां रत्नानामद्य स्थितिः अस्ति, तत्तु सर्वं कालेन कवलीकृतम्। किं बहुना, सर्वदेशेषु शिरोमणिभूतस्य भारतवर्षस्यापार-

धनसम्पत्तिः कुत्र विद्यते ? किं न सा सम्पत्तिः वैदेशिकैः पारेसमुद्रं नीता ? अत एवोच्यते यत् सर्वेषां निचयानामन्तः क्षय एव दृश्यतेऽस्माभिः ।

अस्मिन् संसारे विभिन्नकालेऽनेके देशा समुन्नतेः पराकाष्ठामारुरुहुः । अन्ये स्वप्रतापपर्वतस्य शिखरं प्राप्नुवन् । महतो रोमनसाम्राज्यस्य वर्णनं कर्तुं न पार्यतेऽस्माभिः यस्योदयेन प्रतापेन समस्तो योरोपदेशो वशतां नीतः का कथा ग्रीकदेशस्य राज्योत्कर्षस्य, यस्य गुणगरिमा अद्याप्यैतिहासिकैस्तारस्वरेण गीयते । बौद्धधर्मस्य प्रचारभूमेः विशालकायस्य परन्तु अधुना असंघटितावयवस्य चीनदेशस्य प्रचुरा कीर्तिः केन गातुं शक्यते ? अयमेव देशः ऐतिहासिकयुगस्य प्रारम्भकाले सभ्यतायाः क्रीडास्थली, नाट्यकलायाः रंगस्थली, कनफ्युशसप्रभृतीनामृषीणां वनस्थली, डा० सनयात् सेनादिराष्ट्रभक्तानां जन्मस्थली, चियांगकाईशेकनाम्नः सेनापतेः रणस्थली आसीत्, अस्ति च । किं बहुना, अयमस्माकं देशोऽपि तदैव स्वोन्नतेः सभ्यतायाश्च पराकाष्ठां प्राप्नोत्, यदा सर्वे देशा अज्ञानेनान्धकारेण संच्छन्ना आसन् । चन्द्रगुप्तविक्रमादित्यस्य राज्यकालेऽस्य देशस्य सभ्यता शिखरमारूढा । तस्मिन् काले श्रुतौ तस्करता, उपवनचन्दनेषु जाड्यम्, अग्नौ भूतिमत्वम्, चित्रेषु वर्णसंकरता, रतेषु केशग्रहाः, अनवरतयज्ञधूमेनाश्रुपातः, मूलानामेवाधोगतिरासीत्, नान्यत्र । अयमेव देशः 'सदयहृदयदर्शितपशुघातस्य' महात्मनः बुद्धस्योपदेशभूमिः, महाराजस्य शिवाजीछत्रपतेः कर्मभूमिः, उत्खातमुगलयवनसाम्राज्यस्य महाराणाप्रतापस्य जन्मभूमिः, 'स्वराज्यमस्माकं जन्माधिकारः' इति महामन्त्रोद्घोषकस्य महाराष्ट्रराष्ट्रपतेः लोकमान्यतिलकस्य कर्मयोगभूमिः, हिन्दूनां मानवर्धकस्य, हिन्दूविश्वविद्यालयसंस्थापकस्य 'महामना' मालवीयस्य तपोभूमिः विद्यते । परन्तु दुःखाभिभूतेन चेतसेदं कथितुं शक्यते यद् भारतवर्षस्य तत् प्राचीनं गौरवं विकरालकालेन कवलितम् । अयं सर्वदेशानामग्रणीः भारतः साम्प्रतमतिनिकृष्टां दशां गतोऽस्ति । नाधुना भारते कालिदासजयदेवप्रभृतीनां महाकवीनां कोमलकान्त-

पदावली श्रूयते, न वा गीयते। दरिद्रतयाऽज्ञानान्धकारेण च समन्वितोऽयं भारतः सुतरां दीनो हीनश्च समजनि, परन्तु नेयं दशा केवलं भारतस्यैव। अन्ये प्राचीनकाले प्रसिद्धा अपि ग्रीसरोमादिदेशाः पतनगर्त गता दृश्यन्ते। यः समुन्नतिं याति स पतनमपि गच्छति इति संसारस्याखण्डनीयः सिद्धान्तः। अनेनैव सिद्धान्तेन चालिताः सर्वे देशाः स्वविभिन्नासु दशासु परिणमन्ति। अत एवोक्तम्—'पतनान्ताः समुच्छ्रयाः'।

निःसारेऽस्मिन् संसारे सर्वेषां संयोगे वियोगे पर्यवस्यति। पूर्वमेवोक्तमस्माभिर्यदयं संसार एका महती धर्मशालाऽस्ति, यत्रानेके जनाः समागच्छन्ति, कञ्चनकालमुषित्वा च यथाभिमतं स्थानं गच्छन्ति। अत एव स्थिरता नास्त्यत्र कस्यापि वस्तुनः मनुष्यस्य वा। सांसारिकमनुष्याणां वास्तविकीं स्थितिं वर्णयता व्यासेन युक्तमुक्तं यत्—

यथा काष्ठं च काष्ठं च समेयातां महोदधौ।<br>
समेत्य च व्यपेयातां तादृग्भूतसमागमः॥"

यथा महासमुद्रे द्वे काष्ठे प्रवहती संयोगेन कतिचित् कालाय संयोगं प्राप्य पुनरपि तस्मिन्ननन्तनीरधौ वियोगं प्राप्नुवतः, तथैव वयं मनुष्या अपि नदीनौकासंयोगेन सम्मेलनं प्राप्य पुनः मृत्युना हृता अनन्तकालाय वियोगं प्राप्नुमः। निशानिशाकरयोः, सूर्यकमलयोः, चपलामेघयोः, चन्द्रिकाचकोरयोः सयोगो न शाश्वतः, प्रत्युत क्षणभंगुर एव। निशायामेव निशा निशाकरेण चन्द्रिकासुधया धवलिता क्रियते। दिवससमये एव कमलिनी दिवाकरेण सनाथीक्रियते। चकोरेण चन्द्रिकापानमपि रात्रावेव विधीयते। चक्रवाकयोः दिवसे संयोगानन्तरं रात्रौ वियोगो भवत्येव। यदाऽचेतनेषु पदार्थेषु, खगयोनिषु चेयं दशा वर्तते, तदा का कथा मनुष्याणाम्? तेषां भाग्यं तु वियोगकठिन्या एव लिखितं विधिना, पुत्रवत्सलः पिता पुत्राद् वियोगं प्राप्नोति, प्रियसमागमोत्सुका कामातुरा कान्ता कान्ताद् विप्रयोगं गच्छति, प्राणादपि प्रियतरा पुत्री विवाहानन्तरं मातुः सकाशाद् विच्छेदं प्राप्नोति। किं बहुना, जीर्णपत्राणि

त्यक्त्वा नूतनपत्राणि आविष्कुर्वती प्रकृतिरपि तारस्वरेण इदमेव घोषयति यत् सर्वस्यापि वस्तुनः संयोगा विप्रयोगान्त एव भवति।

मरणान्तं च जीवनमित्यस्मिन् विषये नास्ति कस्यापि सन्देहलेशः। संसारे यो जातः, तस्य मृत्युरवश्यंभावी। इयमेव संसारस्यासारता संसरणशीलता वा। 'जातस्य हि ध्रुवो मृत्युः, ध्रुवं जन्म मृतस्य च' इति शाश्वतिकं सिद्धान्तं प्रतिपादयता भगवता श्रीकृष्णेनास्यैव संसरणशीलसिद्धान्तस्य समर्थनं कृतम्। अस्मिन् संसारे बहवो मनुष्या जाता येषां नामापि अद्य न श्रूयते। सत्यमुक्तं केनापि सुमतिना—

> मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः
> सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः।
> अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते
> नैकेनापि समं गता वसुमती नूनं त्वया यास्यति॥

सज्जनानां पालका दुर्जनानां नाशकाश्चन्द्रगुप्तादयो राजानः अद्य कुत्र सन्ति? कविभ्यः प्रत्यक्षरं लक्षस्य दाता क्वास्ते भोजः? यवनानां मानमर्दनशीलः कुत्र तिष्ठति महाराणाप्रतापः? किं बहुना, अस्माकं स्वतन्त्रतासंग्रामस्यानन्यतमसेनानायकः क्व गतोऽस्मान् विहाय लोकमान्यतिलकः? हन्त! क्व निलीनो दुर्जातबन्धुः गोखले-महोदयः? सर्वे कालवशेन विनाशं प्राप्ताः, मृत्युमुखं प्रविष्टाः। अत एव सर्वथा समीचीनोऽयमाभाणकः—

> सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
> संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥

## २४. मानवताया आदर्शः

परिवर्तिनि संसारे कः खलु गृहीत्वा स्वीयं जन्म नैव विलयमयते। श्लाघ्यः स एव मनुजो यस्य पवित्रं चरित्रं मानवानां कृते विद्यते आदर्शभूतमनुकरणीयं च। भारतवर्षोऽयं पूतवृत्तानां महापुरुषाणां जन्मस्थलमिति कः खलु सचेता नैव चेतयते, कः खलु विद्वान् नैव विदांकरोति। पवित्रचरित्राणां महति राशौ साम्प्रतं पुरुषद्वयस्यैव चरितं किञ्चिदालोचयामः। तयोरेकोऽतीव प्राचीनकाले भारतं स्वजन्मना खण्डयामास अपरश्च भारतं स्वातन्त्र्यलक्ष्मीसम्पन्नं विधायाधुनैव दिवंगतः। एकश्च महात्मा बुद्धः, अपरश्च महात्मा गान्धी।

### (क) भगवान् बुद्धः

वर्ततेऽयं महात्मा न केवलं भारतवर्षस्य, अपि तु संसारस्य महती विभूतिः। अनेन स्वोपदेशेन संसारं या शान्तिः, अहिंसा, मैत्री च समुपस्थापिता सा तु न केनापि कर्तुं पार्यते। अनेन महात्मना प्रचारितो धर्मः—बौद्धधर्मः कथ्यते। धर्मस्यास्यानुयायिनो न केवलं भारतवर्षे सन्ति, अपि तु ब्रह्मदेशे, चीन-जापान-लंका-आदिदेशेष्वपि विराजन्ते। अत एवास्य धर्मः अन्ताराष्ट्रियधर्मो वर्तते। ख्रीष्टधर्मस्य संस्थापको महात्मा 'ईसा' बुद्धस्योपदेशेन सुतरां प्रभावित इति पुरातत्त्वविदां मतम्।

भगवान् बुद्धः अद्यप्रभृति २५०० वर्षपूर्वं भारते वर्षे कपिलवस्तु-नगरे शाक्यवंशे राज्ञः शुद्धोदनस्य महिष्याः 'माया' देव्याः कुक्षावागत्य तस्यै श्वेतहस्तिरूपेण स्वात्मानं स्वप्ने प्रदर्शयन् यथाकालं वैशाख-मासस्य पूर्णिमायां लुम्बिनीवने शालतरुमूले भूमिष्ठो बभूव। यस्मिन् देशे यस्मिन् काले च धर्मस्य ग्लानिर्भवति तत्र तदैव जगत्संरक्षिणी महती शक्तिराविर्भूय विप्लुतं धर्मं पुनः संस्थापयतीति लोकनीतिः।

आबाल्यं लालितो भोगसुखेन विलासोपकरणैश्च परिवृतोऽपि स क्षत्रियोचितशस्त्रादिचर्यायां विविधविद्यासु चतुःषष्टिकलासु च परं नैपुण्यमलभत। षोडशवर्षदेशीय एव तस्य विवाहो बभूवेति स्मर्यते। बुद्धस्य लोकोत्तरा वैचित्र्यशालिनी शक्तिः सर्वत्र शैशवादेव प्रकटिताऽभूत्। कदाचित् प्रवृत्ते मधुमासवैभवे स उद्यानविहारार्थं परिजनेन सार्धमुपवनमगच्छत्। तत्र मार्गे जरारोगमृत्युभिराक्रान्तान् पुरुषान् स ददर्श। तान् दृष्ट्वा तस्य मनः सुतरां विषण्णमभवत्। तत एव सोऽकृतोद्यानविहारो निर्विण्णहृदयो व्यरमत। उदासीनं वीतस्पृहं च कुमारमवलोक्य पितुर्मनसि प्रकृत्यैव महती चिन्ता पदमकृत। पुत्रस्य भोगाकांक्षासंजननार्थं निखिलोऽपि प्रयत्नो निष्फलो बभूव महाराजस्य। मनसि निर्वेदे क्रमेण घनीभूते दृढीभूते च गृहत्यागसंकल्पे, कदाचित् स निशीथे सुप्तेषु पौरजानपदेषु, निःशब्दे च राजकुले, महाभिनिष्क्रमणाय प्रतस्थे। सद्योजाततनयः, सुरूपा गुणवती भार्या, स्नेहानुबन्धको जनकः, प्रभूतमैश्वर्यम् , नवं वयः, कान्तं वपुः किमपि तस्येप्सिताभिमुखं मन प्रतीपयितुं च नाशकत्। उक्तं च महाकविना कालिदासेन—

क ईप्सितार्थं स्थिरनिश्चयं मनः।
पयश्च निम्नाभिमुखं प्रतीपयेत्॥

राजोचितं वस्त्रभूषणादिकं परित्यज्य धृतश्रमणवेशो भिक्षां चरन् देशाद् देशान्तरं पर्यटन्नासीत्। अन्तराऽन्तरा मारस्य प्रलोभनमप्यजायत, परन्तु तस्य वज्रसारे चेतसि कथमपि लेशोऽपि विकारस्य नादृश्यत। यस्य शमस्य सम्पत्तये स संसारस्य स्नेहपाशं छित्वा, अभुक्तामपि सुविशालां राज्यश्रियं परित्यज्य प्रव्रज्यामाश्रितः, न तु स केवलं प्रव्रज्यां समधिगन्तुं शक्यते, अपि तु योगादिसाधनं विविधं दुश्चरं तपोऽपि तत्रापेक्ष्यत इति विजानानो योगोपदेष्टुर्मार्गोपदर्शनसमर्थस्य कस्यापि देशिकस्यान्वेषणमकरोत्। तथा च कुर्वन् कालायसगोत्रस्य आराडाख्ययोगिनः प्रसिद्धिं चावगत्य तत्र गत्वा तदाश्रमे कियत्कालमवसत्। तदनुज्ञया च तत्र ध्यानादिविहारेषु तत्प्रदर्शितदिशा चिरं [illegible] दधे।

षड्वर्षपर्यन्तं बुद्धेन भीषणं तपस्तेपे, परन्तु न किमपि तत्र तत्त्वं प्राप्तम्। तस्मिन् एव तपस्याकाले तस्य तपो नाशयितुं मारेण भीषणमाक्रमणं कृतम्, परन्तु समाधिचित्तेन बौद्धेन मारं विजित्य स्वतपः रक्षितवान्। तस्येयं प्रतिज्ञाऽऽसीद् यत—

इहासने शुष्यतु मे शरीरं
न त्वगस्थिमांसं विलयं तु जातु।
न वासनात् कायमिदं चलिष्यति।

अनेन विधिना भीषणप्रतिज्ञोऽयं बुद्धः स्वतपसि सफलो बभूव। समयानन्तरं स कठिनं तपः परित्यज्य ज्ञानं प्राप्त्यै इतस्ततो विचरन् बोधगयां प्राप्तः। तत्र बोधिवृक्षस्य मूले तिष्ठन्ननेन जगतां दुःखस्कन्धस्य मूलभूतामविद्यां भित्वा सर्वाः प्रतिसंविदः सम्प्राप्य बोधिपाक्षिकान् धर्मानुपलभ्य च क्षीणास्रवः सर्वज्ञत्वं 'बुद्धत्वम्' चाधिगतवान्।

बहुविधा लोकोत्तराः सिद्धयस्तेन लब्धाः। षडभिज्ञाः दशबलानि तपस्यायाः फलभूतं सर्वमेव तस्य फलम्। सर्वसत्त्वानां सर्वविधदुःखापगमे यः कृतोत्साहो भोगसुखानि तस्य स्थिरनिश्चयं मनः कथं चालयितुं प्रभवेयुः। स मानवानां दुःखमल्पीकरणाय तेषु मैत्री-अहिंसायाश्च प्रचाराय वाराणसीं प्रति प्रस्थितः। सद्विद्यानां क्षेत्रभूतं धर्मप्रस्थितानां विलासनिकेतनम्, तपस्विनां विदुषां योगिनां च सिद्धपीठरूपं भूमिष्ठमपि भूतभावनस्य त्रिशूलोपरि स्थितं नगरमिदं सम्यक्संबुद्धस्य धर्मचक्रप्रवर्तनस्थानमभूत्।

तत्रैव तेन चत्वार्यार्यसत्यानि समुपदिष्टानि। दुःखमस्तीति प्रथममार्यसत्यम्, तस्य हेतुरस्तीति द्वितीयम्, दुःखनिरोधो निर्वाणाख्यः संभवतीति तृतीयम्, तदुपायभूतोऽष्टाङ्गमार्गोऽप्यस्तीति तुरीयम्। निर्वाणममृतपदम्; तदस्ति, तत्प्राप्त्युपायश्चाप्यस्ति। कः स उपायः? अष्टाङ्गमार्ग इति बुद्धदर्शनम्। वस्तुतस्तु ज्ञानेनैवाविद्यानिवृत्तिर्भवति। तस्यां निवृत्तायां क्रमेण संस्कारादिनिवृत्त्या दुःखं निवर्तते। ज्ञानसम्पत्तये चाष्टाङ्गयोगमार्ग एव शरणम्। योगाङ्गानि तावत्-सम्यग्

दृष्टिः, सम्यक् संकल्पः, सम्यग् वाक्, सम्यगाचारः, सम्यगाजीवः, सम्यग् वीर्यः, सम्यक् स्मृतिः, सम्यक् समाधिश्च।

सर्वप्रथमं काश्यां नातिदूरे ऋषिपत्तने ( सारनाथेति साम्प्रतं प्रख्याते स्थले ) भगवता बुद्धेन चतुर्णामार्यसत्यानां समुपदेशः कृतः। तदनन्तरं विभिन्नेषु जनपदेषु परिभ्रमन् स सद्धर्मं प्रचारयामास। केचिद् गृहे निवसन्त उपासकाः बभूवुः, केचिच्च गृहं त्यक्त्वा भिक्षवः। पुरुषवत् स्त्रियोऽपि तस्य शिष्यमण्डले प्राविशन्। क्रमेण विहारसंघारामादि स्थाने-स्थाने निर्मितमभूत्। संघस्य परिचालनोपयोगिनो नियमा निबद्धा जाताः। ब्राह्मणाः, राजानः, श्रेष्ठिनः, वैश्या अपि त्रिरत्नम्–बुद्धम्, धर्मम्, संघं च शरणमुपागच्छन्। भगवतो बुद्धस्य शिष्यत्वं सहस्राधिकाः जना अगृह्णन्। तस्य धर्मस्य प्रचारमपि चाकुर्वन्।

अनेन विधिना धर्मोपदेशं कुर्वन्, जनेषु अहिंसाया मैत्र्याश्च प्रचारं सम्पादयन्, भगवान् बुद्धः चत्वारिंशदधिकवर्षकालं ज्ञानमुपदिशन् जीवानुद्धरन् पश्चिमे वयसि कुशीनगराख्ये स्थाने स्वशरीरं मुमोच।

## ( ख ) महात्मा गान्धी

अयं महात्मा भारतवर्षस्य सर्वश्रेष्ठो नेता आसीत्। राजनीत्यामनेन सत्यस्याहिंसायाश्च प्रतिष्ठा कृता। आङ्ग्लीयैः पराधीनतापाशे निक्षिप्ता भारतभूमिः अस्यैव महात्मनः समुद्योगेन, बुद्धिबलेन, तपश्चर्यया च स्वतन्त्रीकृता। नायं केवलं राजनीतिकनेता, अपि तु सामाजसुधारकोऽप्यासीत्। हिन्दुसमाजे अस्पृश्येति नाम्ना प्राचीनानामन्त्यजानां महती दुर्दशासीत। तैः सार्धं पशुवद् व्यवहारं जनैः क्रियन्ते स्म। अनेन महात्मना तेषामुद्धारार्थं भगीरथप्रयत्नः कृतः। अनेनैव प्रकारेण शिक्षायामार्थिकक्षेत्रे च कर्मवीरेण गान्धिना महान् परिवर्तनः समुपस्थापितः।

भारतीयैः अस्मै 'महात्मा' इति उपाधिः प्रदत्तः। अस्य स्वभावः सरलः, दिनचर्या च सरलाऽऽसीत्। अयं महात्मा सर्वदा कौपीनवस्त्र

चर्महीनमुपानहमधारयत्। अत एव विदेशीयैरयम् 'अर्धनग्नः साधुः' कथितः। परोपकारनिरतोऽयं महात्मा जनानामतीव प्रिय आसीत्। यावज्जीवमनेन देशस्य सेवा कृता। अन्त्यजानां समुद्धरार्थमनेन स्वशक्तिः समर्पिता।

अयं महात्मा सौराष्ट्रप्रदेशस्य 'सुदामापुरी' नाम्ना प्रसिद्धे पोरबन्दरनगरे सन् १८६९ खीष्टाब्दे 'पुतलीबाई' देव्यामजायत। अस्य पिता कर्मचन्द्रः 'राजकोट' नाम्नो राज्ञः प्रधानमन्त्रिपदमलञ्चकार। कर्मचन्द्रः चरित्रवान् धर्मनिष्ठश्चासीत। अस्य चरित्रस्य प्रभावो गान्धिनश्चरित्रे दृश्यते। कर्मचन्द्रः स्वपुत्रस्य नाम 'मोहनदासः' अकरोत्। द्वादशवर्ष एवायम् 'कस्तूरीबाई' इति नामधेयामात्मनः सदृशीं सवर्णां कुलोद्गतां कन्यामुपायंस्त। प्रथमे वयस्येव श्रीमोहनदासः प्रकृत्या ऋजुः सत्यप्रवणश्चासीत्। माता-पितृशुश्रषणे उपोषणे चास्य रतिरभूत्। तत्र मातृचरितमेवास्य प्राभवच्चेतसः। राजकोटे भावनगरे चायं शिक्षां प्राप्तवान्। छात्रावस्थायां नातिप्रतिभावानयमासीत्। गणिते संस्कृते चातीव मन्दबुद्धिः, मेट्रिकपरीक्षामुत्तीर्यायं महाविद्यालये (कालेजे) पठनार्थं प्रविष्टः, परन्तु कतिपयमासानन्तरमेव विधानम् (ला) पठनार्थं इङ्गलैण्डदेशं प्रस्थितः। प्रस्थानात्पूर्वं मात्रे प्रत्यजानीत-सुरां न पास्यामि, मांसं न भक्षयिष्यामि, मैथुनं च वर्जयिष्यामीति। तदनुगुणमेवानेन विदेशेऽप्याचरितम्। न च मनागपि ततो विचलितः।

'बैरिस्टरी' परीक्षां विविधदुत्तीर्य श्रीमोहनदासः इमं देशं प्रत्यावर्तत। कञ्चित् कालमनेन 'बैरिस्टरी' कार्यमाचरितम्, परन्तु न च पुष्कलं धनमुपार्जत्। सौराष्ट्रदेशीयैः कैश्चित् 'यवन' श्रेष्ठिभिः आहूतोऽयं दक्षिणाफ्रीकामगात्। तत्र च यवनश्रेष्ठिनो यो विवादो न्यायालये समुपस्थित आसीत् तस्मिन् 'समझौता' (शान्तिः) स्थापितः। दक्षिणाफ्रीकादेशे निवसतां भारतीयानां दशा सुतरां शोचनीयाऽऽसीत्। ते राजनैतिकाधिकारैर्वञ्चिता आसन्। तेषामिमां दुःखितां दशां दृट्ष्वा सुतरां पीडितोऽयं महात्मा तेषामुद्धारार्थं महान्तं प्रयत्नमकरोत्। तत्रत्यैः शासकैः सह भारतीयानामुद्धरार्थं महानहिंसात्मको युद्धोऽभवत्। अयं

युद्धः 'सत्याग्रह' नाम्ना प्रसिद्धोऽभवत्। सत्यस्य वस्तुनः आग्रहः सत्याग्रहः। गान्धिमहोदयस्य 'सत्याग्रह' शब्देनायमाशयो यद् यत्कर्मसमाचीनं वर्तते तत्प्राणव्ययेनाप्यवश्यमेव करणीयम्। भवतु नामास्य परिणामः प्राणहानिः; परन्तु न तस्मिन् चिन्ता विधेया। तत्र सत्याग्रहान्दोलने स शासकानां कोपभाजनमभवत्, कारावासञ्चा-लभत्। अन्ते च १८६४ तमे खीष्टाब्दे नेटाल-इण्डियन कांग्रेस नामक-संस्थायाः स्थापना अभूत्। गान्धिमहोदयस्य नेतृत्वे अनया संस्थया तत्रत्यभारतीयानां जीवनस्य सर्वेषु अपि क्षेत्रेषु महती क्रान्तिः कृता। अन्ततोगत्वा दक्षिणाफ्रीकादेशस्य प्रधानमन्त्रिणा जेनेरल-स्मट्स-महोदयेन गान्धिना सह सन्धिः कृता। अनेन भारतीयानां राजनैतिका-धिकारेषु महती समृद्धिः सञ्जाता।

यस्मिन् समये महात्मा गान्धी अफ्रीकादेशे आन्दोलनं कुर्वाण आसीत् तस्मिन् समये भारतेऽपि स्वराज्यप्राप्तये राष्ट्रीयमहासभा कार्यं करोति स्म। अफ्रीकातो निवृत्य गान्धिमहोदयः १६१६ खीष्टाब्दे वत्सरे भारतीयराष्ट्रीयसभायां सम्मिलितो बभूव। सन् १६२० खीष्टाब्दे 'असहयोग' आन्दोलनं चालयामास। अयं महान् राजनैतिकः आन्दो-लनः आसीत्। महात्मनः आज्ञया शतसहस्राधिकैर्जनैः राजकीयपदवी जीविका च परित्यक्ता। एतस्यैव नेतृत्वे १६३० खीष्टाब्दे कांग्रेसेन पूर्ण-स्वतन्त्रतायाः प्रस्तावः स्वीकृतः। अयमान्दोलनः 'नमकसत्याग्रह' आन्दोलननाम्ना प्रथितोऽभूत्। लवणस्य निर्माणः आन्दोलनस्यास्य प्रधानः कार्यक्रम आसीत्। महात्मना गान्धिना समुद्रतटस्थितस्य 'डाड़ी' नामधेयस्य स्थानस्य यात्रा कृता। तत्र गत्वा महात्मनानेन लवणस्य संग्रहं कृत्वा राजनियमः त्रोटितः। अन्ततोगत्वा 'गान्धि-इर्विन-सन्धिः' समभवत्। अनेन सन्धिनियमेन समुद्रतटवासिने जनाय लवणः सुलभीकृतो निःशुल्कश्च।

१६३२ वत्सरे यदा आङ्गलशासकैः हरिजनानां कृते पृथग् निर्वाचन-स्य प्रस्तावः कृतः तदा तस्य विरोधे महात्मना आमरणमनशनं प्रारब्धम्। तस्मात् कारणात् शासकाः पृथग् निर्वाचनस्य प्रस्तावं

परावर्तितवन्तः। सन् १६४२ तमे ख्रीष्टाब्दे 'भारतं परित्यजत' नाम्ना प्रसिद्धमन्तिममान्दोलनं चालितं गान्धिमहोदयैः, यत्कारणात् सार्ध-द्वयवर्षं कारागारं भुक्त्वाऽपि सन् १६४७ वर्षे पूर्णस्वतन्त्रतां प्रापितोऽयं देशः।

इदं जानन्त्येव सर्वे यत् स्वतन्त्रताप्राप्तिसमये देशस्यास्य हिन्दुस्तान-पाकिस्तानरूपेण द्विधा विभाजनं जातम्। अतो विभाजनात् पूर्वं विभाजनान्तरं च कलिकातानगरे 'नोआखाली' नगरे च हिन्दु-मुसलमानसम्प्रदाये भयानका उपद्रवा आरब्धाः। तस्य स्फुलिङ्गाश्च प्रायेण समस्तेऽपि देशे वैर-विद्वेषानलं प्रज्वालितवन्तः। अस्मिन्नपि अशान्तिसमये उपद्रवपूर्णे च काले महात्मागान्धिमहोदयः शान्ति-स्थापनार्थं सुमहत् प्रयासमकरोत्। अन्ते च अनेन शान्तिप्रयासेन सहैव १६४८ तमे वत्सरे जनवरीमासस्य त्रिंशत्तारिकायां प्रार्थनासभायां गच्छतैकेन यवनोत्पातपीडितेन दुरात्मना 'नाथूरामगोडसे' नामधेयेन युवकेन गुलिकया (गोली) हतः सन्निदं पाञ्चभौतिकं शरीरं परित्यज्य चरमां शान्ति-लेभे।

इदमेव महात्मनो गान्धिनः संक्षिप्तं जीवनचरितं वर्तते। अफ्रीका-गमनादारभ्य मरणकालपर्यन्तं भारतीयस्वतन्त्रतायै, भारतीयानां सर्व-विधसमुन्नतये च महात्मना गान्धिमहोदयेन यद् यदान्दोलनं चालितम्, यानि यानि च अभूतपूर्वाणि कार्याणि कृतानि, तत्र तत्र च यादृशी सफलता लब्धा तत् सर्वं वर्णनातीतं वर्तते। केवलमहिंसात्मकसत्या-ग्रहेण या स्वतन्त्रता लब्धा गान्धिमहोदयैः सा मानवेतिहासस्य अभूत-पूर्वा घटना वर्तते। एतदतिरिक्तं शिक्षाप्रसाराय, ग्रामोद्योगप्रवर्तनाय, हरिजनानामुद्धाराय, विविधकुरीतिनिवारणाय, पाश्चात्त्यशिक्षया सह समागताया विलासिताया दूरीकरणाय, स्वदेशिवस्तुप्रचाराय, प्राच्य-संस्कृतेः प्रतिष्ठापनाय, नैतिकाध्यात्मिकबलवर्धनाय, समस्तेषु च मानवेषु जातिधर्मनिर्विशेषं सौहार्दस्थापनाय च महात्मना गान्धिमहोदयेन यानि यानि कार्याणि सम्पादितानि, ये ये च आदर्शाः समुपस्थापिताः,

ते भारतीयेतिहासे चिरस्मणीया भविष्यन्ति । किमधिकम्, महात्मानो गान्धिमहोदया मनुष्यसदृशा भूत्वाऽपि अमानुषशक्तिसम्पन्ना महामानवा आसन् । ते युगप्रवर्तका आसन् । एतादृशा महापुरुषा यदा कदा हि भुवमवतरन्ति । संसारेऽस्मिन् कोटिशो जना निरर्थकं जन्म लब्ध्वा मृत्युं प्राप्नुवन्ति, परन्तु तस्यैव महापुरुषस्य जन्म सार्थकं येन देशस्य, राष्ट्रस्य स्वजातेश्च समुन्नतिः कृता । सत्यमेवोक्तं केनापि कविना :—

परिवर्तिनी संसारे मृतः को वा न जायते ।
स जातो येन जातेन देशजातिसमुन्नतिः ॥



## २८. शिक्षाया आवश्यकं साधनम्

### ( क ) चित्रपटम्

आधुनिकसमये ये खलु आविष्काराः सन्ति तेषु 'सिनेमा' इति ख्यातस्य चित्रपटस्य स्थानं महत्त्वपूर्णं विद्यते। अनेनाऽऽविष्कारेण जनजीवने क्रान्तिः समुपस्थिता। चित्रपटं द्विविधं भवति—(१) मूकम्, ( साइलेण्ट ), (२) वाणीयुक्तञ्च (टॉकी)। प्रायः त्रिंशद्वर्षाणि व्यतीतानि वाणीयुक्तं चित्रपटं नासीत्, परन्त्वधुना वाणीयुक्तस्य चित्रपटस्यैव प्रचारः प्रसरति। चित्रपटे विभिन्नदेशानां प्राकृतिकदृश्यानां साक्षात्कारः कर्तुं पार्यते। नाटककथानकञ्च दृश्यं प्रत्यक्षं दृष्टिगोचरं क्रियते।

संसारेऽस्मिन् चित्रपटनिर्माणस्य सर्वप्रधानं स्थानम् अमेरिका 'हालीवड' नामकं नगरं विद्यते। अत्र सहस्राधिकाः तारिकाः ( सिनेमा स्टार्स ) निवसन्ति, याः खलु चित्रपटस्य निर्माणे स्वसंगीतेन, नृत्येन, वाद्येन च सहायतां कुर्वन्ति। अस्मिन् देशे मुम्बापुर्याम् ( बम्बई ), पुण्यपत्तने ( पूना ), कलिकतायां ( कलकत्ता ) च चित्रपटनिर्माणस्य कार्यं भवति। तत्र शताधिकास्तारिकाः चित्रपटे निर्माणे व्यस्ताः सन्ति। इमाः तारिका एकस्मिन्नपि चित्रपटे गीतं गीत्वा नृत्यञ्च कृत्वा सहस्राणि रूप्यकाणि प्राप्नुवन्ति। अस्य चित्रपटस्योन्नतिर्द्रुतगतिना भवति भविष्यति च।

सर्वप्रथमं चित्रपटानि जनमनसोऽनुरञ्जनस्य सर्वप्रधानानि साधनानि सन्ति। चित्रपटं दृष्ट्वा अल्पेन व्ययेन यादृशं मनोरञ्जनं भवति तत्तु न केनापि साधनेन भवितुमर्हति। चित्रपटगृहं ( सिनेमा हाउस ) गत्वा द्विघटिकाऽभ्यन्तरे कमपि रमणीयं दृश्यं ( फिल्मम् ) दृष्ट्वाऽऽनन्दस्य यां परां कोटिं लभते मनुष्यः स त्वन्यत्र दुर्लभः। अनेनैव कारणेन लक्ष्याधिकाजनाः प्रतिदिनं नियमपूर्वकेण चित्रपटं द्रष्टुं गच्छन्ति। आधुनिक-

समयेपटे यद् दृश्यं दर्शायते तत्तु सुतरामश्लीलः। न किमपि दृश्यं (फिल्म) वर्तते यस्मिन् गर्हितशृङ्गारस्य निकृष्टप्रेमकथायाश्च वर्णनं न स्यात्। कामयोगप्रधानाः सर्वा अपि इमाः कथाः सन्ति। इदमेव कारणं यत् कतिपये कुत्सितरुचयो जनाः प्रतिदिवसं चित्रपटगृहं गत्वा तद्दर्शनेनैव स्वकामवासनाया पूर्तिं कुर्वन्ति। कामप्रधानचित्रपटदर्शनेन कामवासना जागर्ति। कामवासनया सदाचारस्य हानिः संजायते। अत एव साम्प्रतं नूतनेनाविष्कारेण अनेन महती विनष्टिर्भवति।

यदि चित्रपटस्य प्रयोगः शिक्षाप्रसारे प्रशिक्षणे च क्रियते तर्हि महान् लाभो भवेत्। ये खलु जना निरक्षरभट्टाचार्याः सन्ति तेषां शिक्षणार्थं चित्रपटस्य प्रयोगः कर्तुं शक्यते। एतद्विषये एवंविधानां चित्रटानां निर्माणं भवेद् येषु अशिक्षितजनानां दुर्गतिः प्रदर्शिता भवेत्। इमान् चित्रपटान् सुदूरेषु ग्रामेषु दर्शयित्वा अशिक्षाया दोषाः, शिक्षाया गुणाश्च दर्शयितुं पार्यते। अनेन विधिना ग्रामीणाऽशिक्षितजना प्रत्यक्षं द्रष्टुं शक्नोति यदशिक्षया का हानिः सञ्जायते। एतत्तु मनोवैज्ञानिको नियमो यत् कस्यापि वस्तुनः श्रवणात् तस्य प्रत्यक्षदर्शनेन जनानां हृदयपटले समधिकः प्रभावः समुपजायते अत एव चित्रपटदर्शनेन अशिक्षाया हानयः प्रत्यक्षमेवोररीकर्तुं शक्यते।

चित्रपटदर्शनेन अशिक्षितग्रामीणेषु शिक्षायाः प्रचारोऽपि कर्तुं पार्यते। बहून् ग्रामीणजनान् एकस्मिन् स्थाने आहूय निमन्त्र्य च वर्णमालाः, तस्या लेखनपद्धतिः, वाक्यरचनायाः प्रकारः, पत्रलेखन-पद्धतिः, समाचारपठनप्रकारः—इत्याद्यनेकानां विषयाणां शिक्षां दातुं शक्यते। प्राचीनवीराणां राज्ञां च पराक्रमं चित्रपटे दर्शयित्वा ग्रामीणेभ्यः प्राचीनेतिहासस्य ज्ञानमपि दातुं पार्यते। विविधानि तीर्थस्थानानि प्राचीननगराणि च दर्शयित्वा तान् भूगोलमपि शिक्षयितुं शक्यते। आधुनिकविज्ञानस्य वैभवानि तेषां नेत्रगोचरीकृत्वा विज्ञानस्यापि स्वल्पं ज्ञानं कर्तुं पार्यते। अनेन विधिना प्रौढशिक्षायां चित्रपटस्य महान् उपयोगो वर्तते।

बालानां शिक्षणेऽपि चित्रपटानां नास्ति न्यूना आवश्यकता। बालाः प्रकृत्यैव कथाप्रियाः कौतुकप्रियाश्च सन्ति। यदि तेषां समक्षे चित्रपटे बालोद्यान (किण्डर गार्डेन) विधिना शिक्षाप्रणाली प्रदर्शिता भवेत् तर्हि तेषां समधिको लाभो भवेत्। तेषामपि कृते भूगोलेतिहास-विज्ञानादिविषयाणां शिक्षाऽऽवश्यकीया। एषां विषयाणमपि शिक्षा तेभ्यो दातुं शक्यते। बालकाः चित्रपटदर्शने बहुसुखमनुभवन्ति। अतस्तान् शिक्षासंबंधिनो दृश्यान् (फिल्म) दर्शयित्वा पठने विषये तेषां रुचिस्तीव्रतरा कर्तुं पार्यते। एष तु हर्षस्य विषयो यदुत्तरप्रदेश-राज्यस्य शिक्षाविभागेनैकः शिक्षाप्रसारविभागः स्थापितः, यो ग्रामीणेषु चित्रपटप्रदर्शने प्रौढशिक्षायाः प्रचारं करोति। अनेन विभागेन बालक-बालिकानां विद्यालयेषु शिक्षासंबंधीनि चित्रपटानि प्रदर्श्य तेषां ज्ञानस्य क्षेत्रं विस्तृतीक्रियते। अत एव शिक्षायां चित्रपटस्योपयोगिता समधिका, अत्र नास्ति कस्यापि सन्देहलेशः।

### (ख) समाचारपत्राणि

समयेऽस्मिन् समाचारपत्रस्य समधिकं प्रयोजनं वर्तते। यथा अन्नं शरीरस्य भोजनम्, तथैव समाचारपत्रमधुना मानसं भोजनम्। यथा दीपकाभावे सर्वत्रैवान्धकारो दृश्यते, तथैव समाचारपत्र-विरहितस्य पुरुषस्य कृते सर्वा दिशः शून्याः भवन्ति। अस्मिन् युगे समाचारपत्रपठनशीलो मनुष्यः कूपमण्डूकवद् वर्तते; स तु देश-विदेशयोः समाचारं नैव ज्ञातुं शक्नोति। आधुनिकोऽयं विज्ञानमयः संसारोऽअतिशयेन तीव्रेण गतिना गच्छन्नस्ति। अस्य महतः संसारस्य विभिन्नदेशेषु प्रदेशेषु च अनेकानि नूतनानि कार्याणि भवन्ति। तानि सर्वाणि समाचारपत्रद्वारेणैव ज्ञातुं शक्नुवन्ति। पाश्चात्त्यदेशेषु समाचार-पत्रेषु महती शक्तिर्विद्यते। ते जनमतप्रकाशनस्य माध्यमाः सन्ति। ते जनमतं परिवर्तनमपि कर्तुं शक्नुयुः। अत एव आधुनिकसमये समाचारपत्रस्यातीवोपयोगिता विद्यते।

समाचारपत्राणां जन्मकथा नाति-पुरातनी। अस्मिन् विषये प्रकाशितानां कतिपयलेखानामवलोकनेन ज्ञायते यत् सर्वप्रथमं खीष्ट-

-ब्दस्य एकादशे शतके चीनदेशे एतादृशं पत्रं प्रकाशितमभूत्। यूरोपे तु सर्वप्रथमं समाचारपत्रस्य प्रादुर्भावः इटलीदेशस्य 'वेनिस' नामधेय-नगरे अभूत्। ततः परं जर्मनीदेशे, तत्पश्चाद् आंग्लदेशे समाचार-पत्रस्य प्रकाशनं समारब्धम्। भारतवर्षे आंग्लदेशीयानां जनानामाग-मनानन्तरं समाचारपत्राणां प्रचलनमभवत्। श्रूयते यत् 'समाचार-दर्पण' नामकं पत्रं सर्वप्रथमं प्रचलितम्, ततश्च शनैः शनैरन्यानि पत्राणि प्रचलितानि। वंगप्रान्ते यदा अष्टादशशताब्द्याम् आंग्लधर्मप्रचारकाः (मिशनरी) समागताः, तदैव समाचारपत्राणां प्रकाशनं समारब्धम्। एतत्तु प्रसिद्धमेव यद् विलियम-केरीनामधेयेन पादरीमहोदयेन भारतीय-भाषायां सर्वप्रथमं पत्रं प्रकाशितम्। ततः प्रभृति भारतस्य विभिन्नप्रान्तेषु समाचारपत्राणि प्रकाशितानि। इदानीन्तु देशेऽस्मिन् प्रतिदिनं एतावन्ति पत्राणि प्रकाशितानि भवन्ति येषां संख्या काठिन्येन गणना कर्तुं शक्यते।

पत्राण्यपि दैनिक-साप्ताहिक-पाक्षिक-मासिक-त्रैमासिक-षाण्मासिक-वार्षिकादिभेदेन विषयभेदेन चानेकप्रकाराणि सन्ति। एषां मध्ये दैनिकेषु साप्ताहिकेषु च पत्रेषु विशेषरूपेण समाचारा एव प्रकाशिता भवन्ति।

वर्तमानकाले इमानि पत्राणि मानव-समाजस्य यावतः उपकारान् कुर्वन्ति तेषां गणना नास्ति। समाचारपत्रपठनेन जना अनेकविषयाणां ज्ञानं लब्धुं शक्नुवन्ति। अस्मिन् काले यः खलु समाचारपत्रं न पठति स न कथमपि शिक्षितः कथयितुं शक्यते। समाचारपत्रपठनेन दैनिकवृत्तानां परिज्ञानम्, विवधविषयेषु लिखितानां निबन्धानां पठनम्, नानाविधानां चित्राणां निरीक्षणम्, सामयिकपरिस्थितीनां परिज्ञानम्, प्रकाशितानां प्रकाश्यमाणानाञ्च नूतन-नूतनानां ग्रन्थानां पत्र-पत्रिकादीनाञ्च परिचयः, विविधसिद्धान्तानामध्ययनम्, मनोरञ्जनैर्लेखैर्मनोविनोदनम्, स्वाभिप्रायप्रकाशने सौविध्यं परस्परविचाराणां विनिमयश्चेत्यादयोऽनेके लाभाः सन्ति। समाचारज्ञानातिरिक्तं पत्र-पत्रिकादीनां पठनेन असंख्यानां विषयाणां सम्बन्धे ज्ञानं जायते। यथा राजनीतिः, इतिहासः, धर्मः, दर्शनम्; स्वास्थ्यम्, साहित्यम्, भूगोलः, आयुर्वेदः, वाणिज्यं विज्ञानञ्च। एषु विषयेषु यादृशा महत्त्वपूर्णाः सारगर्भिता लेखाः, आलोचना वा

पत्रपत्रिकादिषु निःसरन्ति तेषां पठनेन यादृशं ज्ञानं जायते तदन्यसाधनैः सर्वथाऽलभ्यं वर्तते ।

शासनविषयेऽपि पत्राणि इमानि महत् साहाय्यं कुर्वन्ति । शासनविभागतो या काचन नवीना व्यवस्था जनतायाः कृते निर्मिता भवति तस्याः समाचारपत्रेण जनतायां प्रचारः क्रियते । अनेनोपायेन जनताऽपि शीघ्रमेव राजकीयां व्यवस्थामादेशं वा ज्ञात्वा तदनुकूलमाचरति । अथ च यदा कस्मिंश्चिद् विवादास्पदे विषये जनताया मतपरिज्ञानस्याऽऽवश्यकता भवति, तदानीमपि समाचारपत्राणि महत् साहाय्यं कुर्वन्ति । एतदतिरिक्तं यदा केचन सासनाधिकारिणो यथेच्छमाचरन्ति, अन्यायं पक्षपातं वा कुर्वन्ति तदा समाचारपत्राण्येव समालोचनाभिर्जनमतप्रकाशनद्वारा च तेषां नियन्त्रणे दोषदूरीकरणे समर्थानि भवन्ति ।

एवमेव व्यापारक्षेत्रेऽपि बहुविधा उपयोगिता दृश्यते समाचारपत्राणाम् । व्यापारिणः श्रेष्ठिनश्च समाचारपत्रादेव विभिन्ननगरे सुवर्णस्यान्नस्य वा यद् मूल्यं तद् ज्ञातुं शक्नुवन्ति । तदनुकूलमेव स्वपण्यस्य क्रयं विक्रयं वा कुर्वन्ति ।

आधुनिकसमये जीविकार्थिनो युवानः समाचारपत्रेषु विभिन्नपदानां (पोस्ट) विज्ञापनं दृष्ट्वा सन्तोषं लभन्ते। ते तानि रिक्तपदानि प्राप्तुं यतन्ते, प्राप्य च प्रसन्ना भवन्ति । समाचारपत्रेषु विवाहविज्ञापनमपि प्रकाशितं भवति । अतः केचन रसिका अविवाहिता युवकाः सुन्दरीं प्रियतमां प्राप्तुं पिपासितया दृष्ट्या समाचारपत्रं पिबन्ति । पत्रे तस्याः परिचयं ज्ञात्वा तां प्राप्तुमुद्वोढुं वा यतन्ते । तां च प्राप्य सुखसागरे निमग्ना भवन्ति ।

यथा संसारस्य किमपि वस्तु निर्दोषं नास्ति, तथैव समाचारपत्राण्यपि सन्ति । अत उपकारस्थाने यदा कादाचित्पकारमपि जनयन्ति । मिथ्यासमाचाराणां प्रकाशनेन भ्रान्तिजननम्, पक्षपातपूर्णलेखानां प्रचारेण पारस्परिकविद्वेषवर्धनम्, ईर्ष्याद्वेषमयीभिः समालोचनाभिः साहित्यिकक्षेत्रे कटुताया उत्पादनम्, अश्लीलविज्ञापनानां

प्रकाशनेन समाजे नैतिकताया अधःपतनञ्चेत्यादयः समाचारपत्राणां कतिपये दोषा सन्ति ।

परन्तु इमे दोषाश्चन्द्रकलंकवदुपेक्षणीया एव । पत्राणामुपयोगिता सर्वजनैः स्वीक्रियते । अस्माकं देशोऽधुना स्वतन्त्रः । अत एव पक्षपात-रहितानां पत्राणां प्रकाशनस्यावश्यकता वर्तते । भारतीयजनेषु राजकीय-शासनसमाचारस्य प्रचारार्थम्, भारतीयस्वतन्त्रतायाः सन्देशं च वितरणार्थं समाचारपत्राणमुपयोगिता वर्तते । आशासे यत् स्वतन्त्रेऽस्मिन् देशे समाचारपत्राणां समधिका समुन्नतिर्भविष्यति, येन प्रत्येको भारतवासी नूतननूतनसमाचारं ज्ञातुं शक्नुयात् ।



## २६. दोषाणां दूरीकरणम्

### ( क ) हिन्दुसमाजस्य परिष्कृतिः

प्राचीनकाले भारतीयसमाजोऽतीव श्रेष्ठः समुन्नतश्चासीत् । समाजे स्त्रीणां पुरुषाणाञ्च समानोऽधिकार आसीत् । स्त्रियः पुरुषैः सह यज्ञेषु तथा चान्येषु सामाजिककार्येषु समानरूपेण कार्यमकुर्वन् । तासामार्थिकी दशा च सुतरां समुन्नताऽऽसीत् । तस्मिन् काले बालिकानामपि बालकैः सह यज्ञोपवीतसंस्कारः समभवत् । उक्तञ्च भगवता मनुना यत्-

"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते"

विद्यालये गुरुकुले च नारीणां पुरुषैः सह शिक्षा समभवत् । अनेन प्रकारेण दृश्यते यत् पुराकाले स्त्रीणां स्थानं हिन्दुसमाजे सुचारुरूपेण प्रतिष्ठितमासीत् ।

तस्मिन् प्राचीनसमये समाजेऽस्मिन् न कोऽपि चरित्रभ्रष्टः पुरुष आसीत्; न कोऽपि स्तेनः न कोऽपि कदर्यः, न कोऽपि अनाहिताग्नि-रासीत् । समुचितमेवोक्तं राज्ञाऽश्वपतिना यत्—

न मे स्तेनो जनपदे न कदर्यो न कर्हिचित् ।<br>
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ॥

अनेन स्पष्टं ज्ञायते यत् पुराकाले भारतीयसमाजोऽतीव सुसंस्कृतः श्रेष्ठश्चासीत् ।

परन्तु 'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः'; संसारे-ऽस्मिन् यस्य वस्तुनः समुन्नतिः दृश्यते तस्य क्षयोऽपि निश्चित एव । यदा समाजे गुणा भवन्ति तदा तस्य समुन्नतिर्जायते, परन्तु यदा समाजे दोषाः समायान्ति तदा तस्य शनैः शनैः क्षयः अधःपतनं च जायते । यदा समाजे अनेके दोषाः समायान्ति तदा तेषां निष्कासन-मतीवावश्यकम्, अन्यथा समाजो रसातलं प्राप्नोति । अयं तु सुतरां

समीचीनः सिद्धान्तो यद् गुणानां ग्रहणं दोषाणां परिहारः करणीयः। अयमेव 'सुधार'-शब्देन व्यवह्रियते। अयं च सुधारो यथा व्यक्तीनां कृते परमावश्यको भवति, तथैव समाजस्यापि कृते।

साम्प्रतं हिन्दुसमाजस्य स्वरूपं तु सर्वथा सदोषं घृणास्पदं च संजातं वर्तते। हिन्दुसमाजो यथैव पूर्वं समुन्नतेरुत्तङ्गशिखरं समारूढमासीत्, तथैव सम्प्रति अधोगतेर्भयानके गर्ते पतितं वर्तते। दृष्टौ प्रसारितायां सर्वत्र दोषा एव दृष्टिपथमायान्ति। समाजस्य सर्वविधकल्याणाय अस्माकं प्राचीनैः समाजव्यवस्थापकैः ऋषिभिः, महर्षिभिराचार्यैश्च वेदशास्त्रादिषु ये ये नियमाः, या याश्च व्यवस्था निर्मिता आसन्, ते तु विलोपं गताः। तेषां स्थाने तु स्वास्थ्यस्य, सदाचारस्य आर्यसभ्यताया विनाशका व्यवहारा प्रचलिता दृश्यन्ते।

हिन्दुसमाजे यः सर्वप्रधानो दोषः स तु बालविवाह एव वर्तते। सहस्राणां बालकानां बालिकानाञ्च विवाहः अष्टवर्षे च दशवर्षे वा क्रियते। प्राचीनपरम्परायाः सदुपासका इत्थं वदन्ति यद् अष्टवर्षीया बालिका गौरी, नववर्षीया रोहिणी, दशवर्षीया तु कन्या भवन्ति। अत एव अस्मिन्नेव काले तासां विवाहः समीचीनः। 'बाबावाक्यं प्रमाणम्' मन्यमानास्ते उद्घोषयन्ति यत्—

अष्टवर्षा भवेद् गौरी नव वर्षा तु रोहिणी।
दश-वर्षा भवेत् कन्या अत ऊर्ध्वं रजस्वला॥

अत एव ते स्तनन्धयानां बालिकानां विवाहं कुर्वन्ति। बालकानामपि इयमेव दशा वर्तते। ये बालाः सुचारुरूपेण दैनिककृत्यमपि कर्तुमयोग्याः सन्ति, तेषां विवाहो महता समुत्साहेन सम्पाद्यते। भगवता मनुना तारस्वरेणोद्घोषितं यद् ब्रह्मचारी पञ्चविंशतिवर्षपर्यन्तं ब्रह्मचर्येण व्रतेन तिष्ठेत्। तदनन्तरमेव स गृहस्थाश्रमे प्रवेशं कर्तुमर्हति, परन्तु अधुना दशवर्षीया बालका एव गृहस्थाश्रमं प्रविश्य गृहस्थधर्ममाचरन्ति। बालविवाहेन देशस्य राष्ट्रस्य जनशक्तिः क्षयं संजायते।

समाजस्य द्वितीयो दोषो वृद्धविवाहो वर्तते। गलितमुखदन्ता अशीतितमवर्षमापन्नाः श्वेतकेशा अपि 'पितामहपदवी'-विभूषिताः केचन पुरुषा षोडश-वर्षीयां युवतिमुद्वहन्ति। ते तु इदं न जानन्ति यत्–

अनभ्यासे विषं विद्या अजीर्णे भोजनं विषम्।
विषं सभा दरिद्रस्य वृद्धस्य तरुणी विषम्॥

कामासक्ता अमी नराधमाः पुरुषा इहलोकेऽनन्यदुःखस्य भाजनं भवन्ति, परलोके च रौरवनरकं यान्ति। तरुणीं स्त्रियमुद्वाह्य घोर-कामाग्निना भस्मीभूता इमे नरपिशाचा द्वित्रीणि वर्षाण्यनन्तरमैहिक-लीलां समाप्य नरकं प्रयान्ति। तेषां विधवा तरुणी गर्हितं जीवनं व्यतीत्य स्वजातिं कुलञ्च कलंकयति। अनेन प्रकारेण बालविवाहेन वृद्धविवाहेन च देशस्य राष्ट्रस्य च शक्तिः क्षयीभवति तथा देशे-ऽनाचारस्य प्रचारो भवति। अत एव आस्या प्रथाया उन्मूलनमती-वावश्यकं विद्यते। अयं तु हर्षस्य विषयो यदाधुनिकाङ्गलशिक्षादीक्षिता युवका युवतयश्च बालविवाहं घृणादृष्ट्या पश्यन्ति। आशासे यत् पञ्चाशद्वर्षाभ्यन्तरमेव बालविवाहस्य च सर्वनाशो भविष्यति।

हिन्दुसमाजे तृतीयो दोषः 'तिलक' अथवा 'दहेज' रूपा प्रथा वर्तते। कन्यायाः पिता उद्वाहनार्थं वराय यत् प्रभूतं धनं ददाति तत् 'तिलकम्' इति कथ्यते। इयं प्रथाऽतीव भ्रष्टा संजाता। विद्याबुद्धिरूपरहिताय एकाक्षायापि वराय तस्य पिता पञ्च षड् वा सहस्राणि मुद्रा वराकं कन्या-पितरं याचते। द्रव्यस्यास्य दानानन्तरमेव विवाहो भवति, नान्यथा। अनया प्रथया धनरहितो बालिकायाः पिता सर्वगुणसम्पन्नां सुन्दरीं सुशीलामपि स्वपुत्रीं गुणवते वराय दातुमसमर्थो भवति। अनेन विधिना सहस्राधिकानां बालानां जीवनं प्रतिवर्षं नश्यते। ये तु हिन्दुसमाजस्य नेतारः सन्ति तेऽपि इमां सर्वनाशिनीं प्रथामनुसरन्ति तर्हि का कथा इतरेषां जनानाम्? अस्या भ्रष्टायाः प्रथाया अचिरेणैव नाशः श्रेयान्।

समाजस्यास्य चतुर्थो दोषः स्पृश्यास्पृश्यभावना। हिन्दुसमाजो द्विश्रेण्योर्विभक्तो दृश्यते—(१) उच्चवर्गः, (२) निम्नवर्गश्च। उच्चवर्गो

ब्राह्मण-क्षत्रिय-वैश्याः सन्ति; निम्नवर्गे शूद्राः वर्तन्ते । इमे खलु 'अस्पृश्याः' इति नाम्ना प्रसिद्धाः सन्ति । प्राचीनपरम्परायाः सरणिमनुसरद्भिः तथाकथितैः पण्डितैरिमे शूद्रा अस्पृश्या मन्यन्ते । अर्थात् तेषां स्पर्शोऽपि नरकाय भवति, तेषां छाया अपवित्रा विद्यते, तेषां सह व्यवहारो घृणास्पदं जायते । ते सार्वजनिककूपनदीतडागेभ्यो जलं ग्रहीतुं न शक्नुवन्ति । तेषां राजनैतिकी दशा आर्थिकी दशा च सुतरां दयनीया वर्तते । परन्तु साम्प्रतं महात्मनो गान्धिनो भगीरथप्रयत्नेन समुद्योगेन च तेषां हिन्दुसमाजे समुन्नतिर्भविष्यति । आशासे यदियं स्पृश्यास्पृश्य-भावनाऽपि शीघ्रमेव विलयं यास्यति ।

मादकद्रव्याणां सेवनमपि अपरो दोषः । अस्माकं समाजे बहुशो जना मांसभक्षणं मदिरापानञ्च कुर्वन्ति । प्रमाणत्वेन मनुवचनमुद्धरन्ति । "न मांसभक्षणे दोषो न मद्ये न च मैथुने, प्रवृत्तिरेषा भूतानाम् ।" परन्तु तेनैव इदमपि कथितं यदेतेषा "निवृत्तिस्तु महाफला" भवति । अत एव जनैर्न मांसभक्षणम्, न च मदिरापानं विधेयम् । स्वतन्त्रेऽस्मिन् भारते वर्षे मदिरापानस्य सर्वथैव निषेधो भवितुमर्हति ।

अधुना धार्मिकस्थानेषु अधार्मिका अधिपतयो विराजन्ते । हन्त ! विद्यार्थिनां ब्रह्मचर्यं तु सहशिक्षया 'सिनेमा-गृहेण' च सुदूरमपसारितम् । गुरवो निरक्षरभट्टाचार्याः सञ्जाताः । साधवः स्वार्थपरायणा दृश्यन्ते । संन्यासिनस्तु गृहस्थेभ्योऽपि अधिकं कामिनी काञ्चनं सेवन्ते । धर्मस्थाने धर्मनाम्ना अधर्मस्य दम्भपाखण्डादीनाञ्च प्रचारो वर्तते । समाजे मातृ-पितृभक्तेः गुरुभक्तेश्च सम्प्रति माहात्म्यं नास्ति । अशिक्षा कुशिक्षा कुसंस्काराः कुरीतयश्च गृहे-गृहे कृताधिकाराः सन्ति । कियतो दुर्गुणान् गणयामः ।

परन्तु हिन्दुसमाजस्य दोषाणां परिगणनया न कस्यापि कार्यस्य सिद्धिर्भवितुमर्हति । शासकानाम्, समाजस्य नेतॄणामयं कर्तव्यो यत्ते समाजेऽस्मिन् ये दोषाः समागताः सन्ति तेषां निष्कासनं विधानद्वारा अथवा प्रचारेण कुर्युः; तदैव हिन्दुसमाज आर्याणां (श्रेष्ठानाम्)

समाजो भवितुमर्हति, नान्यथा। आशासे यद् भूतभावनो भगवान् विश्वनाथः समाजस्य समुन्नतिमचिरादेव विधास्यति।

## ( ख ) ग्रामाणामुन्नतिसिद्धिः

भारतवर्षो ग्रामप्रधानो देशः। अस्माकं संस्कृतिरपि ग्रामीणा वर्तते। देशेऽस्मिन् नवति ( ९० ) प्रतिशतानि ग्रामाः सन्ति। केवलं दशप्रतिशतं नगराणां स्थितिः। भारतयीजनता ग्रामेष्वेव निवासं करोति। प्राचीनकाले ग्रामो जनपदस्य एको मुख्यो विभाग आसीत्। समस्ता भारतीयसंस्कृतिराश्रमकल्पेषु ग्रामेष्वेव विकसिताऽऽसीत्। पुराकाले इमे ग्रामा धनधान्येन सम्पन्ना आसन्। तत्र सर्वाणि दैनिक-व्यवहारस्य वस्तूनि लभ्यन्ते स्मः, ग्रामीणं जीवनं सरलं पवित्रं चासीत्; सर्वे ग्रामीणा जनाः सुखेन स्वजीवनयापनं कुर्वन्ति स्मः।

परन्तु दैवदुर्विपाकादस्माकं ग्रामाणां दशा सम्प्रति नितान्तमेव दयनीयता वर्तते। सुखपूर्वकं जीवनयापनाय येषां साधनानामावश्यकता भवति तेषां ग्रामेषु सर्वथा अभाव एव दृश्यते। ग्रामीणजीवनं सम्प्रति सर्वप्रकारेण नीरसं निरानन्दं कष्टबहुलञ्च विद्यते। सर्वैरपि जीवनोप-योगिभिः साधनैर्वञ्चिता ग्रामीणजनता महता कष्टेन कालं यापयति। ग्रामेषु शिक्षायाः, औषधस्य, जीविकायाश्च नितान्तोऽभावो दृश्यते।

मानवजीवनस्य कृते शिक्षायाः सर्वाधिकं महत्त्वं वर्तते। नगरे विद्यालया महाविद्यालया, विश्वविद्यालयाश्च विद्याप्रदानाय स्थापिताः सन्ति, परन्तु ग्रामेषु शिक्षाया महान् अभावो दृश्यते यदि कोऽपि बालकः प्रारम्भिकीं शिक्षां समाप्य महाविद्यालये पठितुमिच्छति तर्हि तस्याऽऽशाभङ्गो भवति। अत एव परिस्थितिवशात् स उच्चशिक्षया वञ्चितो भवति। ग्रामेषु दूरे दूरे पाठशालाः सन्ति। जनता शिक्षाया महत्त्वं न जानाति। दरिद्रता पृथगेव दण्डमादाय मार्गे विघ्नबाधामुपस्थापयन्ती तिष्ठति। ग्रामेषु पुस्तकान्यपि नोपलभ्यन्ते। अत एव ग्रामीणजनानां शिक्षा सम्यग्रूपेण न भवितुमर्हतीत्यत्र को विस्मयः।

मानव-जीवनस्य कृते द्वितीयमावश्यकं वस्तु स्वास्थ्यं वर्तते। अस्यापि महती न्यूनता ग्रामेषु वर्तते। प्रथमं तु स्वास्थ्यसम्पादने

ध्यानमेव नास्ति ग्रामीणानाम्। द्वितीयञ्च धनाभावात् स्वास्थ्यकरं भोजनं न प्राप्नोति। तृतीयन्तु औषधानामभावाद् महती प्राणहानिः सञ्जायते। ग्रामेषु न कुत्रापि औषधालयः सन्ति। अत एव यदि कोऽपि रुग्णो भवति तर्हि चिकित्साऽभावादचिरादेव स परलोकं गच्छति। कतिपयाः ससत्त्वाः स्त्रियः सम्यगुपचाराभावेन भृशं पीडिताः प्राणानपि त्यजन्ति। यदि गर्भिणीनामुपचारायौषधालया स्युस्तर्हि बह्वीनां स्त्रीणां प्राणरक्षा भवेत्।

ग्रामेषु दरिद्रतायाश्चक्रवर्तिसाम्राज्यं विद्यते। धनाभावेन ग्रामीणानां गृहं शून्यम्, वस्त्रं मलीमसम्, शरीरञ्च दुर्बलं दृश्यते। येऽस्माकं 'अन्नदातारः' सन्ति तेषां गृहेऽन्नस्य सुतरामभावो वर्तते। कीदृशी विडम्बनेयम् ? पुराकाले ये ग्रामा धनधान्येन परिपूर्णा आसन् तेऽधुनाऽन्नरहिता दृश्यन्ते। ग्रामेषु नगरपालिकायाः अभावाद् जनस्वास्थ्यस्य न कोऽपि चिन्तां करोति। न कोऽपि राजमार्गस्तत्र वर्तते। या खलु एकपदी पगडण्डी, साऽपि धूलिधूसरिता कण्टकसमन्विता चास्ति। एभिः कारणैर्ग्रामनिवासः सुतरां कष्टजनको दुःखदायी च वर्तते। अतो न कोऽपि ग्रामे उषितुमिच्छति।

यदि भारतवर्षस्य प्राचीनाया आर्यसंस्कृते रक्षा करणीयाऽस्ति तर्हि ग्रामाणां दशासु समुन्नतिः परमावश्यकीया। अतो भारतीयराष्ट्रस्य समुन्नतये ग्रामीणस्य दशायां क्रान्तिकारिणः परिवर्तनस्यावश्यकता वर्तते। जगतो जीवनभूतानां कृषकदेवानां यावद् यथोचितपूजा सम्मानञ्च न भविष्यति तावदन्येषामपि जीवनं कष्टमयमेव स्थास्यति। अत एव इदन्तु परममेवावश्यकीयं यद् ग्रामे ग्रामे पाठशालाः व्यायामशालाः औषधालयाः पुस्तकालयाश्च स्थापनीयाः। चलचित्र-( सिनेमा ) प्रदर्शनद्वारा व्यवहारोपयोगिन विषयाः शिक्षणीयाः। प्रतिग्रामे एकस्य विद्यालयस्यौषधालयस्य च स्थापनाऽवश्यमेव करणीया। उद्योगस्य व्यापारस्य गृहशिल्पानाञ्च प्रवर्तनं विधेयम्। समये समये सभाः कृत्वा विभिन्नविषयेषु व्याख्यानदानस्य योजना विधेया।

परन्तु ग्रामीणानां कृते सर्वप्रधाना आवश्यकता कृषेरुन्नतिर्वर्तते। प्राचीनकृषि-साधनैः समधिकक्षेत्राणां कर्षणं भवितुं न शक्नोति। अत एवाधुनिकविज्ञानस्याविष्कारभूतैः 'ट्रेक्कर' यन्त्रैः कृषिकर्म सम्पादनीयम्। अनेन यन्त्रेण समधिका भूमिरल्पकालेनैव क्रष्टुं शक्यते। अधुना पृथ्वी-माता रुष्टा भूत्वा नाधिकमन्नं ददाति। अत एव 'कम्पोस्ट' इति विधिना खादं विधाय पृथिव्यै खाद्यमवश्यमेव दातव्यम्। सेचनकर्म विना म कृषिः समधिकमन्नं प्रयच्छति। अत एव कूपात् तडागाद् वा जलमा-दाय क्षेत्रस्य सेचनं कर्तव्यम्। तदैव 'माता भूमिः' प्रभूतमन्नं प्रदायास्माकं जीवनस्य रक्षां करिष्यति।

अयं तु हर्षस्य विषयो यदस्माकं 'प्रान्तीयसरकारः' ग्रामाणमुद्धाराय महान्तं प्रयासं करोति। प्रान्तीयशासनेन ( गवर्नमेण्ट ) पञ्चायतविधानं ( एक्ट ) निर्माय ग्रामीणानां महान् उपकारः कृतः। अनेन पञ्चायत-विधानेन प्रतिग्रामे एकस्य पञ्चायतगृहस्य निर्माणमावश्यकम्। तत्र पञ्चायते गृहे ग्रामीणा जनाः समागत्य समाचारपत्रं पठित्वा ज्ञानलाभं कर्तुं शक्नुवन्ति। तत्र आकाशवाणी ( रेडियो ) श्रुत्वा श्रोतानन्दं प्राप्तुं समर्थाः सन्ति। अनेन नियमानुसारेण प्रतिग्रामं पञ्चायतसभायाः स्थापना कृता। इयं पञ्चायतसभा ग्रामीणजनानां प्रतिनिधिभूता विद्यते। अस्या इमे कर्तव्याः—विवदमानानां जनानां वैरस्य सन्धिं विधाय शान्ति-स्थापना, ग्रामे स्वच्छताया व्यवस्था, जनस्वास्थ्यस्य रक्षा, राजमार्गाणां वीथ्याश्च निर्माणे सौष्ठवम्, जनानां शिक्षाप्रबन्धः, औषधालयानां स्थापनम्, ग्रामीणानां बहुमुखी समुन्नतिश्च।

यदि पञ्चायतसभायां निर्वाचिताः सदस्याः कुशलाः, न्यायप्रियाः, निष्पक्षपातिनो स्युः, तदा ग्रामाणां समुन्नतिरल्पकालेनैव सम्पस्यते। अस्माकं सरकारः प्राणप्रणेन ग्रामाणां समुन्नतिः कर्तुमिच्छति। अत एव आशासे यद् भगवतोऽनुकम्पया ग्रामीणानां समुद्योगेन च तेषां दशा परिवर्तिता भविष्यति। इमे ग्रामा अचिरेणैव कालेन धनधान्यस्य सुख-समृद्धेश्च स्थानानि भविष्यन्तीति किं कोऽपि संदिग्धे ?

❁

## २७. महाकाव्यस्य विकासः

आदिकाव्येति नाम्ना प्रथितस्य वाल्मीकिरामायणस्य निर्माणादनन्तरं महाकाव्यं केन प्रथमं व्यधायीति सम्यग् ज्ञातुं न शक्यते। महावैयाकरणस्य महर्षिपाणिनेः 'जाम्बवतीजयम्' नाम महाकाव्यमतीव प्रकृष्टसामग्रीसंभृतं प्रादुरभूद् यत्करालकालस्य कुटिलिम्ना नावाप्यते। केवलं पाणिनिरचिताः कतिपये श्लोकाः सुभाषितादौ लभ्यन्ते। तेषु प्राप्तेषु श्लोकेषु शब्दानां गुल्फः, अर्थस्य हृद्यत्वम्, रसस्य परिपोषः, अलंकारस्य विन्यासस्तथावलोक्यते यथाऽन्यत्र द्रष्टुं प्रायेणावकाशो न भवति। एवं क्रमेण वररुचेरपि निर्मितिः शेमुषीजुषां तोषं सम्पादयन्ती सञ्जाता साऽपि दुर्भाग्यवशान्न प्राप्यते। केवलं कियन्ति पद्यानि लभ्यन्ते, येषां दर्शनेन सचेतसां चेतः समुल्लसत्येव। महाभाष्यकारस्य कृतौ श्लोकांशानामुद्धृतिरपि हृदये कौतुकं सन्तनोति। एवमेतन्मध्यकाले निर्मितानां महाकाव्यानां साकल्येनोपलब्धिरद्यावधि न जाता, किन्तु प्राप्तैः कतिपयैरेव हृदयावर्जकैः पद्यैः सहृदयाः परमां प्रीतिमुपासते एव। अतः परं कालिदासः कवितासीमन्तिनीरसिकपरिवृढः प्रादुर्भूय तामेव रसमयीं पद्धतिं परिष्कर्तुं स्वपरमोत्तमकृतिभिः प्रयेते, साफल्यञ्चासामान्यं लेभे। एतस्य कविकुलतिलकस्यानुयायिनः अश्वघोषभर्तृमेण्ठादयः सञ्जाताः। इमेऽपि रुचिररचनाचातुर्येण काव्यरसिकानां प्रसादमुत्पादयितुं प्राचुर्येण पराक्रमन्त। इतीयं रेखोट्टंकिता रसप्रधानमहाकाव्यानाम्।

अतः परं महाकाव्यनिर्माणे महत्परिवर्तनं जातम्। स्वप्रतिभाविभासितभावुको भास्वरकीर्तिर्भारविः (६०० सं०) प्रादुर्भूय कवितासरस्वत्याः स्रोतो मार्गान्तरेण प्रावाहयत्। अयञ्च मार्गो विचित्रमार्गः 'अलंकृतमार्गः' इत्याद्यभिनवामाख्यां लेभे। इतः पूर्वं महाकाव्येषु वस्तुसन्तानः पृथुलः, रसपरिपोषप्रयासो विशेषोऽधिकृत आसीत्, किन्तु महाकविरयं स्वकीये किरातार्जुनीये महाकाव्ये कथावस्तुनः स्वल्पत्वमूरी-

कृत्य वर्णनविशेषेण तद्विस्तरमातेने। अस्मिन् सायम्-प्रातः-सरित्-गिरि-विपिन-ऋतु-जलक्रीडाप्रभृतिवस्तूनां विस्तृतवर्णनेन महाकाव्यस्य कलेवरं पुष्टीचकार। शब्दचित्रेण समरवर्णनं कृत्वा विचित्रमार्गस्य अन्वर्थता कथिता। एवमिमे महाकवयः स्वप्रबन्धे प्राधान्येन अलंकारान् नियोज्य सालंकृतां कवितामुपस्थाप्य रसिकशिरोमणीनां पाठकानां मनसि तां प्रति अप्रतिमां रतिमापादितवन्तः। एतेषां कृतौ अलंकाराणामुपन्यासस्तथा न कृतोऽवलोक्यते यथा कवितादेव्याः सौन्दर्यं पिहितं स्यात्। प्रस्तुतनैसर्गिकीं सुषमामसमां सन्धातुमेवायमध्यवसाय उज्जृम्भते। इदञ्चापरं वैलक्षण्यमत्र दृग्गोचरीक्रियते यत् प्रतिसर्गान्तं 'लक्ष्मी' शब्दसन्धानम्। राजनीतेर्वर्णनेऽपि महत् कौशलमाकलयाञ्चकार। अस्यां परम्परायामितिहासवद् घटनाक्रमस्य प्रसरो नावलोक्यते, श्लिष्टप्रहेलिकादिवद् बुद्धिव्यायामोऽपि नोपेक्ष्यते। उक्तिवैचित्र्येण, अलंकारसन्निधानेन, गुणगौरवेण, रीतिनिर्वाहेण रसस्य पुष्टिमेवाकुर्वन्, किन्तु अंगिनो रसस्यापेक्षया अंगानामलंकारादीनामेव उद्ग्रीवतया अवस्थानेनैषां प्राधान्यम्। भूयसा व्यपदेशो भवतीति सिद्धान्तं स्वीकृत्यैव अलंकृतमार्ग इति संज्ञां व्यधुर्बुधा अस्य।

अतः परं भट्टिरचितं रावणवधनामकं महाकाव्यं सप्तमशतकस्यान्ते प्रस्तूयते। यद्यपि तत्र व्याकरणस्य कौशलं प्राधान्यं भजते, तथापि काव्यस्य कामनीयकं न तिरोहितं भवतीति वेद्यम्। अत्रापि भारविप्रचालितः पन्था एव स्वीकृतो दृश्यते। व्याकरणस्य प्राधान्येऽपि काव्यसौष्ठवं नापाकृतमिति यदुक्तं तदुदाहरणेन निर्दिशामः।

वनगमनप्रसंगे भ्रातृस्नेहपरवशेन लक्ष्मणेन महाराजो दशरथो बहुधा निन्दितः। क्रुद्धं तं प्रबोधयितुं भगवान् राम उपसान्त्वयति—

कृती श्रुती वृद्धसतेषु धीमांस्त्वं पैतृकं चेद् बचनं न कुर्याः।
विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या॥

भारविणा प्रदर्शितः पन्था माघेन संस्कृतः परिष्कृतश्च। महाकविरयं सप्तमशतकस्यान्ते अष्टमस्यारम्भे च प्रादुर्भूतः। अयमपि अलंकृतिमार्ग-

मूरीकृत्य 'शिशुपालवधम्' व्यरचयत्। अयं भारविं सर्वथा अनुकरोति। कथावस्तुनो विन्यासेऽपि, अलंकारादिगुम्फनेऽपि छन्दश्चयनेऽपि व्यंग्यादिघटनेऽपि राजनीत्यादिसमुपस्थापनेपि बाहुल्येन सादृश्यमुभयत्रावलोकयामः। किन्तु अनुकरणमिदं महाकवेरस्य महिमानमेव कलयति। स्वस्य प्रतिभाप्रकर्षेण, असाधारणेन पाण्डित्येन, असदृशेन वैदग्ध्येन, असामान्येन कवित्वेन, सूक्ष्मतमेन प्रकृतिपरीक्षणेन, लोकोत्तरेण अनुभूतिवैभवेन, अद्भुतेन वाग्वश्यत्वेन च भारविमतिक्रामति महाकविरयम्। अत एव 'उपमा कालिदासस्य भारवेरर्थगौरवम्। दण्डिनः पदलालित्यं माघे संति त्रयोगुणाः'। 'नवसर्गगते माघे नवशब्दो न विद्यते'। 'कृत्स्नप्रबोधकृद् वाणी भारवेरेव भारवेः। माघेनेव च माघेन कम्पः कस्य न जायते' इत्याद्याः सूक्तयोऽस्य विषये विद्वद्गोष्ठीषु गीयन्ते। एतत्काव्यस्य चातिप्रसिद्धत्वाद् नोदाह्रियते।

एतस्मिन् वंशे महाकवे रत्नाकरस्य नाम बहुमानपुरस्सरं गृह्यते। अयं महाकविः कश्मीरदेशीयः शैवः अवन्तिवर्मणः सभापण्डितश्चासीत्। श्रूयते चैवम्—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥ इति।

अतोऽयं नवमशतकस्योत्तरार्द्धे स्वजनुषा भारतभुवमलञ्चकारेति स्पष्टम्। एतस्य 'हरिविजयम्' नाम महाकाव्यं पञ्चाशत्सर्गात्मकं चारुचमत्काराञ्चितं सर्वाण्यपि महाकाव्यानि अतिशेते काव्यवैशद्येन वर्णननैपुण्येन च। अयं च महाकवेर्माघस्य श्रीकृष्णचरितावलम्बिने महाकाव्याय स्पर्धमानः श्रीकण्ठचरितं हरविजयं निबबन्ध। एतस्मिन् कथावस्तुनोऽल्पीयस्त्वेऽपि वर्णनस्य भूयस्त्वं सर्वान् चमत्करोति। अत्र शब्दार्थयोरुभयोरपि संश्लेषोऽतितरां राजते। अयं तु यत् प्रतिजानीते सत्यमेतत्—

हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे।
अपि शिशुरकविः कविः प्रभावाद् भवति कविश्च महाकविः क्रमेण॥

शिवस्वामिनः कप्फिणाभ्युदयं नाम महाकाव्यमपि सर्वविधं कामनीयकं रक्षति। इदं तु महाकाव्यं पंजाबविश्वविद्यालयेन प्राकाशि। आख्यानञ्चास्य बौद्धसाहित्यान्नीतम्। इदमपि महाकाव्यं भारविप्रदर्शित-पथेन प्रचलतीति वेद्यम्। इदं 'शिवाङ्कम्' नाम प्रतिसर्गान्तं शिवशब्दो-पन्यासात्। अत्र प्रतिभायाः प्रकर्षः, कवित्वस्य परिपाकः सम्यगनु-भूयते।

अतः परं श्रीमंखकं विस्मर्तुं कः प्रभवेत्? कश्मीरदेशीयोऽयं शैवो द्वादशशतकस्य मध्ये जयसिंहमहाराजस्य सभापण्डित असीत्। एतेन श्रीकण्ठचरितं निर्मितम्। अत्र त्रिपुरविजयो वर्णितः। कथावस्तुनः स्वल्पत्वेऽपि वर्णनवैदग्ध्येन महतीं भूमिकामधिरोपितमिदं महाकाव्यम्। अत्र पञ्चविंशतिः सर्गाणां राजते। तत्रारम्भे सर्गद्वये मंगलाचरणं सूक्तिस्तुतिश्च मार्मिकं वर्णितम्। अतः परं श्रीहर्षं सहर्षं स्मरामः, यत्काव्यकौशलेन सचेतसां चेतः प्रतिपदं समुल्लसति। अयं तु महाकवि-र्महापण्डित आसीत्। कान्यकुब्जाधिपस्य विजयचन्द्रस्य तत्सुतस्य जयचन्द्रस्य च समां विभूषयन्नयं द्वादशशतकस्योत्तरार्द्धे स्थितिमापेदे। एतस्य विपुलानि ग्रन्थरत्नानि काव्यप्रबन्धाश्च कीर्तिं गायन्ति।

> साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
> तर्के वा मयि संविधातरि समं लीलायते भारती।
> शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
> भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥

इति स्वपरिचयेऽनेनालेखि। एतद्ग्रन्थपर्यालोचनविमुखानां कृतेऽस्यामुक्तौ स्यान्नाम गर्वोद्भावनसम्भावनम्, किन्तु यैरेतस्य ग्रन्थः सादरं वीक्षितः स्यात्तैस्तु तदुक्तौ मनागपि संशयं स्वीकर्तुं नैव सम्भाव्यम्। एतस्य कल्पनायाः प्राज्यं साम्राज्यम्, पदशय्यायाः साधु सन्धानम्, अर्थप्रकर्षस्य चमत्कारकः प्रकारः, दार्शनिकविचाराणां सरसं निबन्धनम्, मनोभावानां भव्यमुद्भावनम्, प्राकृतिकदृश्यानामप्रतिमं प्रस्तावनम्, अलंकारणां शोभनो विन्यासः, छन्दसामसदृशः प्रयोगः, रीतिनामुत्तममुपस्थापनं कं सहृदयं नाप्याययति, न तर्पयति, न मुग्धी-

करोति ? एतस्य 'नैषधीयचरितम्' उज्ज्वलयशसो निदानमस्य, गौरवं संस्कृतभाषायाः, चिन्तामणिः कवीनाम्, आनन्दनिधानं भावकानाम्, विस्मयभवनं समीक्षकाणां वा भाति ।

अतः परं जैनकविषु हरिचन्द्रादीनां धर्मशर्माभ्युदयादिकं च तन्महाकाव्यमिमां परम्परां संरक्षति । ऐतिहासिकं च महाकाव्यं परिमलस्य नवसाहसांकचरितं च बिल्हणस्य विक्रमांकदेवचरितम्, कल्हणस्य राजतरंगिणी च महतीं प्रतिष्ठामासादयति । एतेषामपि काव्येषु तथैवालौकिकश्चमत्कारः, हृद्यं वर्णनं वस्तुविन्यासश्च समुपजृम्भते; परिमलस्तु कालिदासीयं मार्गमनुकरोति, इतरौ द्वौ भारवेर्मार्गम् । बिल्हणस्य कृतौ सूक्तयो विद्वत्कण्ठहाराः सन्तीति वेद्यम् ।

एतस्मिन् प्रसंगे कुमारदासस्य, क्षेमेन्द्रस्य च नाम न गृहीतम् । यत इमौ द्वावपि कवी रसपद्धतिमेव परिष्कुरुतः । क्षेमेन्द्रस्तु नीतिकाव्यस्य असदृशः प्रणेता । एवं हि क्रमेणाद्यावधि सुरसरस्वत्याः कोशे एवंविधानि विविधानि रत्नजातानि जातानि जायन्ते च । एतेनास्याः सुरगिरो महिमामण्डितो भवतादिति दिक् ।



## २८. काव्यम्

काव्यं हि नाम सहृदयैकवेद्यास्वादं पीयूषम्। इदं हि कर्णपेयममृतं रामयति सन्तापं सांसारिकम्, जनयति चालौकिकमानन्दसन्दोहम्। रजस्तमोऽभिभवेन सत्त्वसंवर्धनेन च शोकमोहकामक्रोधादिद्वन्द्वोद्वेगं न्यक्कृत्यसमत्वमूलकं सामरस्यमभिसारयति; प्राणिनामन्तःप्रविश्य तत्तत् सुखदुःखादिसंवेदनं संवर्धयति; अनेकेषु एकत्वमनुभावयति; दुःखेषु द्रवीकरोति; रागिषु रमयति; वीरेषु समुत्साहयति; अनाचारिषु क्रोधयति; किन्त्वेतासु भूमिकासूपस्थाप्यापि रसास्वादनव्यापारेण प्रीणयत्येव रसिकान्। एवंविधं भावभाषयो रमणीयं साहचर्यं कं न चमत्करोति? कं नाप्याययति?

कवेः कर्म काव्यं कथ्यते। कविश्च क्रान्तदर्शी भवति। स न केवलं पारिपार्श्विकं घटनानुविद्धं सुखदुःखादिकमनुभवति; नापि सजातीयानां मानवानामेवानुभूतिं साक्षात्करोति; न च देशकालादिसीम्नि संकुचितमेवार्थं वेत्ति; प्रत्युत सार्वदेशिकम्, सार्वकालिकम्, सार्वजनीनञ्च वृत्तमात्मसात्करोति। तेषामनुभूतिर्भावान् जागरयति भावप्रवणे हृदये तस्य। स चोत्थितस्तीव्रो भावो यथोचितं पदकम्बकमारुह्य सहृदयानां हृदयं प्रविशति। उक्तं हि भट्टतौतेन (दशमशतके वै०) काव्यकौतुके—"दर्शनाद् वर्णनाद् वाऽपि लोके जाता कविश्रुतिः" इति। एवं हि कविगतं रसं सहृदया आस्वादयन्ति। आदिकवेः श्लोकत्वमापन्नः क्रौञ्चचीत्कारजनितः शोकः कं न व्यथयति? नाकुलयति? न तन्मयं करोति? लौकिकीं वाचमवलम्ब्य निस्यन्दमानेयं कवितासरस्वती स्वस्रोतःसुधया हृदयक्षेत्रमासिञ्च्य सचेतसां भूरिभावाननुभावयन्ती भावकसमृद्धिमेधयति। इत्थञ्चेदं काव्यं शृङ्गारो वाग्देव्याः, जीवितं व्युत्पत्तिश्रियः, दर्पणः समाजस्य, रसायनं भावव्रजस्य, कुलगुरुर्व्यवहारस्य, सुमेरुः कलाकुलस्य, निस्यन्दो रसतरङ्गिण्या इति। किन्त्वेवंभूतमपि काव्यं न समेषां

शेमुषीमाश्लिष्यति । उक्तं हि [ द्वादशशतकायेन ] बिल्हणेन विक्रमाङ्कदेवचरिते—

कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ इति ।

तत् केयं साहित्यविद्या ? यां विना चर्व्यमाणमपि काव्यं नोद्गिरति सुधाधाराम् ? इति सन्निहिततमस्याप्यात्मनोऽपरोक्षानुभूतिसम्पादयित्रीमध्यात्मविद्यामिव काव्यस्य जीवातुतत्त्वमास्वादयितुं साहित्यविद्यामपि बुधा आद्रियन्ते; यतस्तस्मादेव काव्यं सांगोपाङ्गं निरूपितं सत् सुखसंवेद्यं भवति ।

तत्र काव्यलक्षणमेवाभ्यर्हितत्वात् प्रागुपन्यस्तमवलोक्यते । यद्यपि भरतादारभ्य नरसिंहकवीन्द्रावधि विषयेऽस्मिन् बहुधा बहुभिर्विचारितम्, किन्तु नाद्यापि सर्वमान्यं तस्य लक्षणं लभ्यत इति विषयस्य दुरूहता स्फुटैव; तथाऽपि पर्यालोचनचतुरा विपश्चिच्चणा लक्ष्येषु चमत्कारसारं साक्षात्कृत्य लक्षणं कृतवन्त एव । तत्र प्राधान्येन मतद्वयं दृश्यते—एकत्र शब्दार्थयुगलस्य चमत्कारकारितया 'शब्दार्थौ काव्यम्' इत्युद्घोषः; अपरत्र वेदादिशास्त्रलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचितेति विचार्य शब्दमात्रस्य काव्यत्वमित्याग्रहः । श्रव्यकाव्यविचारचर्चाया आद्य आलंकारिको भामहः काव्यालंकारसूत्रे (षष्ठमशतके) 'शब्दार्थौ सहितौ काव्यम्' इति लक्षयति । परस्परं स्पर्धमानयोः शब्दार्थयोर्यथावत् साहित्यं काव्यमिति तन्निष्कर्षः । इदमेव मतमनुसृत्य 'गुणालंकारयुक्तौ शब्दार्थौ काव्यम्' इति वामनः । अदोषावित्याधिकविशेषणौ तौ काव्यमिति मम्मटः, (एकादशशतके) काव्यप्रकाशे । मतान्तरे प्रथमं तावदग्नि पुराणम्—अग्निपुराणम् (आधुनिकरूपं दशमशतके) व्यासरचितम् ।

संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना 'पदावली' ।
काव्यं स्फुरदलंकारगुणवद् दोषवर्जितम् ॥

इति लक्षयति । अत्र 'इष्टार्थम्' वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितमिति कण्ठरवेण व्याचख्यौ । इदमेव मतं दण्डी (सप्तमशतके)

काव्यादर्शे मन्यते—'शरीरं तावदिष्टार्थव्यच्छिन्ना पदावली' इति सङ्गिरन्। 'निर्दोषं गुणालंकाररसवद् वाक्यं काव्यम्' इति भोजराजः, (एकादशशतके) सरस्वतीकण्ठाभरणे। 'गुणालंकाररीतिरसोपेतः साधुशब्दार्थसन्दर्भः काव्यम्' इति वाग्भटः। 'निर्दोषं गुणालंकारलक्षणरीतिवृत्तिमद् वाक्यं काव्यम्' इति जयदेवः (द्वादशशतके) चन्द्रालोके। रसादिमद् वाक्यं काव्यम्' इति शौद्धोदनिः। 'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथः, साहित्यदर्पणे। 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति पण्डितराजो जगन्नाथः, रसगङ्गाधरे। 'ध्वन्यात्मकं वाक्यं काव्यम्' इति महिमभट्टः, व्यक्तिविवेके। 'रसालङ्कारयुक्तं सुखविशेषसाधनं वाक्यं काव्यम्' इति केशवमिश्रः। इत्येवं यत्किञ्चिद्वैलक्षण्योपेतं लक्षणं काव्यस्य दृश्यते। एतान्युभयविधानि लक्षणानि सुपरीक्षितानि प्रेक्षावद्भिः। मया तु स्थानाभावादत्र न प्रयत्यते, किन्तूभयेषां निष्कर्षोऽयमवश्यं निवेदनीयो यत् काव्यं दृष्टार्थस्य श्रुतार्थस्य वा रसपरिग्रहेण, अलङ्कारसंयोजनेन वा साधूपन्यस्यति। तत्र नवीनतामिवायोजयति। उक्तं हि आनन्दवर्धनेन ध्वन्यावलोके :—

> दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।
> सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः॥

इति शब्दार्थ-युगलस्य वा काव्यत्वं तदैव सम्पद्यते यदा तत्रोपनिबद्धो रमणीयार्थो भावतरङ्गान् मानसे समुद्वेलयति सचेतसाम्। रागमयीं वृत्तिं वा समुन्मीलयति। सङ्कोचमाकुञ्चय वैशद्यमावेदयति; प्रतिक्षणमनुभूयमानं स्वार्थमूलकं क्षुद्रं हृदयदौर्बल्यमाकृष्य भूम्निपदेऽभिषिञ्चति; अव्ययं भावसाम्राज्यमर्पयति। इमामवस्थामारोप्य लौकिकं कालुष्यमपनयति।

प्रोक्तानि लक्षणानि विध्यात्मना काव्यमवगमयन्ति। सम्प्रति इतरव्यावृत्त्याऽपि तत्स्वरूपप्रतिपत्तये यतनीयमित्याकलय्य तदाख्यायते। न शब्दमात्रं काव्यम्, अन्वयव्यतिरेकाभ्यां काव्यत्वप्रयोजकगुणानां तत्राभावात्। नापि विज्ञानं काव्यम्, तत्तु भूतभौतिकप्रपञ्चेषु दुग्धेषु सर्पिरिव व्याप्तं सत्यमनुसन्धातुं तत्तद्विश्लेषणपरीक्षणाभ्यां जगतो बहिरन्तःसमप-

पत्तिमतीं च व्याख्यां कुरुते, किन्तु काव्यं जगतः कार्यकारणपरम्परायाम- प्रतिबद्धमपि जगत्यन्तर्हितं सत्यमञ्जसावबोधयति । न चापि दर्शनं काव्यम्, तत्रापातप्रतीयमानस्य वस्तुजातस्यापार्थत्वप्रतिपादनपूर्वकं तदन्तर्वर्ति सत्यमुद्घाट्यते युक्तिप्रमाणाभ्याम्, न तथाऽत्र । न चैति- ह्यमपि काव्यम्, ऐतिह्यं घटितघटनाचक्रं परित्यज्य पदमपि चलितुं नोत्सहते, न तथेदम् । नापि पुराणं काव्यम्, तत्र कल्पना विश्वासरूपेण पूज्यते, अत्र तु तस्या विनियोगः सत्यप्रतिपत्तये कल्पनात्मनैव भवतीति विशेषः । इत्थं च वाङ्मयस्यैवंविधान् विषयानवगणय्यावशिष्टं रसात्मकं वाक्यकदम्बकं काव्यं भवति । स्व० जयशंकरप्रसादस्तु 'काव्य और कला' नाम्नि ग्रन्थे लक्षयति—काव्यमात्मनः सङ्कल्पात्मिकाऽनुभू- तिरस्ति, यस्याः सम्बन्धो न विश्लेषणेन, न विकल्पेन, नापि विज्ञानेन; सा तु श्रेयोमयी प्रेयोरचिता ज्ञानधाराऽस्ति । विश्लेषणात्मकैस्तर्कै- र्विकल्पानामारोपैश्चासंगता याऽऽत्मनो मननक्रिया वाङ्मयरूपेणाभि- व्यंज्यते साऽसंशयं प्राणमयी श्रेयःप्रेयोभ्याञ्च परिपूर्णाऽस्ति । अत एवा- स्माकं साहित्यस्यारम्भः काव्यमयोऽस्ति । चिन्तामणिनाम्नि ग्रन्थे स्व० आचार्यरामचन्द्रशुक्लास्तु—यथाऽऽत्मनो मुक्ताऽवस्था ज्ञानदशाभिधीयते तथैव हृदयस्य मुक्ताऽवस्था रसदशेति व्यपदिश्यते । हृदयस्येमामेव मूर्तिं साधयितुं मनुष्यस्य वाचां शब्दात्मकं विधानं काव्यमाख्यायते ।

यथा प्राच्या विपश्चितः काव्यं लक्षयन्तोऽभूवन्, सन्ति च, तथैव पाश्चात्त्या अपि पर्यालोचकाः प्रयतन्ते स्म । तत्रोदाह्रियन्ते त्रिचतुराणि लक्षणानि । अत्र शेक्सपीयरनामा कविमूर्धन्यो वदति—

As imagination bodies forth the form of things unknown,

The poet's poe... turns them to shapes,
And gives to airy nothings local habition and name.

अर्थात् कवेः कल्पना अज्ञातवस्तुभ्यो रूपं ददाति । कवेर्लेखनी वायवीयान् नगण्यान् अस्तित्वशून्यांश्चापि पदार्थान् मूर्तान् कृत्वा नाम- धामभ्यां योजयति ।

वर्ड्सवर्थनाम्ना कविः काव्यं प्रस्तौति—

Poetry is the spontaneous overflow of powerful teelings. It takes its origin from emotion recollected in tranquility. अर्थात् काव्यं शान्तिसमये स्मृतानां प्रबलमनोवेगानां स्वच्छन्दः प्रवाहोऽस्ति ।

कोलरिजः—Poetry is the best words in the best order. अर्थात् काव्यमुत्तमोत्तमशब्दानामुत्तमोत्तमं क्रमविधानमस्ति ।

इत्येवंजातीयानि लक्षणानि लक्षितानि । यस्यालोचकस्य यस्मिन्नंशे चमत्कारानुभूतिर्जाता तत्रैव कृतबुद्धियोगः शाब्दे निबन्धने तां निबबन्ध । एतेन पुनरस्य दुर्ज्ञेयतैव सिद्ध्यति । अत एव 'केचिद्वाचां स्थित-मविषये तत्त्वमूचुस्तदीयाम्' इत्यादिना अनिर्वचनीयतैवास्य प्रत्यज्ञायि । एभिरुक्तलक्षणैर्यदि लक्ष्य-प्रतिपत्तिः स्यात्तर्हि सफलो मे श्रम इति विभाव्यते ।

## २९. काव्यप्रेरणा

मानवस्य सर्वाऽपि प्रवृत्तिः कञ्चन हेतुमवलम्ब्यैव जायते, विना किञ्चन बलवत् कारणं स काञ्चिदपि पवृत्ति कर्तुं नोद्युक्तो भवति। काव्यकला मनुजस्य श्रेष्ठतमाध्यात्मिकप्रवृत्तीनां प्रतीकमस्ति। बुद्धेरुत्कृष्टतमसारतत्त्वं सम्प्राप्यैव मनुष्यः स्वीयानुभूतिं प्रकटयितुं शब्दार्थयुगलरूपं सुन्दरं द्वारमङ्गीकरोति। स आत्मीयेनालौकिकज्ञानचक्षुषा (प्रातिभचक्षुषा) पदार्थसौन्दर्यं संप्राप्नोति। एवं स जगतः पदार्थेषु मानसिभावेषु च रसस्याक्षयं निधिं सम्प्राप्य केवलं स्वजीवनमानन्दमयं सम्पाद्य च न कृतकृत्यो भवति, किन्तु स्वानुभूतानन्दस्य प्रकाशनमात्मकलया विधाय दर्शकान् पाठकांश्चानन्दरसपरिपूर्णान् विधातुमपि प्रयतते। एतत्सम्पादनमेव मानवानुभूतेरवसानमस्ति।

अस्माकमृषिप्रवराणां प्रत्यक्षदर्शनं स्पष्टयति यदानन्दानुभवार्थमेव स्वयं रसतृप्तेन केनाप्यंशेनान्यूनेनापि विश्वसृजा विश्वं व्यरचि। 'रसेन तृप्तः न कुतश्च नोनः' (अथर्व० १०।८।४४) रसतृप्तविश्वकर्तुरखण्डयैकया रसधारयाऽभितो विश्वं व्याप्तं विद्यते। अनया रसधारया शतसहस्रसंख्यया सरांसि सर्वत्र समपारिषतेव। ततो रसास्वादनार्थं मानवानां प्राणः सदा व्याकुलाः सन्ति। रससम्प्राप्तिर्मानवजीवनस्य परमं लक्ष्यमस्ति। आनन्दानुभवार्थमेव विकलचेतास्चेतन इतस्ततः परिबाभ्रमति। स रसमनुभूय रेखामयं स्वरमयं चित्रमयं वा किमपि द्वारीकृत्य स्वानुभूतरससंतृप्तिं बहिः प्रकाशयति। स क्षुद्रस्वार्थं मुख्यतया स्वोद्देश्यं कृत्वाऽन्यस्मै रसानुभवानन्दमप्रदायैव रसं पातुं नाभिलषति, किन्तु स्वकीयं स्वत्वमियता प्रकारेण बृंहयति यत् ततः परं नावशेषयति किमपि। इदं स्वत्वस्य परत्वेन सह तादात्म्यकरणमेव साहित्यशास्त्रपरिभाषया साधारणीकरणशब्देन व्यवह्रियते। रसोपलब्ध्यनन्तरं रसोन्मीलनस्य प्रधानसाधनं कला विद्यते।

सन्ध्याकाले रक्ताभवारिदमालावृतस्य मंजुलध्वनिं कुर्वतां हरितरक्तवर्णानामुड्डीयमानपक्षिणां गणेनालंकृतस्य नभस्तलस्य शोभां वीक्ष्य तूलिकया तां चित्रीकर्तुं चित्रकारो व्याकुलो भवति, अत्युन्नताट्टालिकामारुह्य गवाक्षेण पश्यन्त्याः शारदेन्दुविनिन्दकवदनतिरस्कृततिमिरायाः रमण्या रामणीयकं दृष्ट्वा कविताद्वारा तत्प्रकाशयितुं कविः प्रलुभति कमनीयवीणातन्त्रीर्झङ्कृत्य तत्स्वरमाधुर्या श्रोतॄन् मोहयितुं वादकोऽतीव परिश्राम्यति वेति विचार्य कलायाः साहित्यस्य च का मूलभूता प्रेरणेति विचिकित्सायां स्वान्तःसुखायेत्येव केवलमुत्तरं पुरः स्फुरति। अथरसानुभवानन्दमुग्धो विदग्धः स्वीयानन्दानुभूतिमनेकविधकलारूपसाधनान्यवलम्ब्योन्मिषति। तथाहि—सर्वतः पूर्णं ब्रह्मतत्त्वमेकमासीत्। एकेन सता तेन रन्तु नाशकि, रिरंसया तेन बहु स्यामिति समकल्पि। अर्थाद् रिरंसैवास्य सतोऽनेकभवनप्रेरिकेत्यायातम्। उपनिषत् स्पष्टमिदमुद्घोषयति—'एकाकी नैव रमते', 'सोऽकामयत', 'एकोऽहं बहु स्याम्' इति। एषा बहुभवनैषणैव सृष्टिमुद्भावयति। सा चैषणा पुत्रवित्तलोकविषयकत्वेन स्वात्मानं त्रिधा भिनत्ति—एषणा, कामना, अभिलाषः। एषणात्रयतृप्त्यर्थमेव सर्वः प्रपञ्चो विलसति (अत्र पुत्रैषणायां भार्यादिविषयकैषणान्तर्भावः, लोकैषणायां यशःसम्पादकधर्मादिकामनाया अन्तर्भावो विद्यते। एवञ्च कामवित्तधर्मास्त्रयः पुरुषार्थो विश्वस्मिन् सर्वप्रवृत्तीनां मूलं निदानमिति फलति। परन्तु मोक्षाख्यश्चतुर्थः परमः पुरुषार्थोऽपि प्राणिजातस्योद्बोधनस्य प्रवृत्तेश्च कारणं भवति। यतो दुःखत्रयलहरिकाप्रताडितो मानवः सदा दुःखत्रयादात्मानं मुमुक्षति। अनेकनियमबन्धननियन्त्रितः पारतन्त्र्यशृङ्खलानिगडितश्च स स्वातन्त्र्यमभिलषति। उक्तञ्च—'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्' इति। प्रयतमानश्च पुरुषः प्रकृतितः सर्वथात्मानं विविनक्ति, ततश्च मुक्तो भवति। अस्यैव साधनार्थं सम्पूर्णाः कलाः शास्त्राणि काव्यानि च प्रथन्ते।

वयन्तु भगवतो गोस्वामिनस्तुलसीदासस्य 'स्वान्तःसुखाय' इति सिद्धान्तमेव समस्तकलादिकानां मूलभूतप्रेरणाशक्तित्वेनाकलयामः। तथाहि अस्मिन् जगति सम्पूर्णप्रेरणानां स्फुरणानाञ्च स्पष्टो भव्यश्च

न केवलमाश्रय आत्मा, अपि तु नानाप्रकारेणानेकरूपाण्यनुकृत्यास्माकं पुरतो विलसति। सम्पूर्णप्रियवस्तुष्वात्मैव श्रेष्ठः। कामनावह्निरात्मद्रुम-माश्रित्य स्वात्मनो महान्तमाकारं विस्तारयति। एवं जीवनस्याशेषकार्येषु शक्तिरस्य कार्यं सम्पादयति। विश्वं निरीक्षमाणस्य निरीक्षणस्यान्ततो मुख्ये केन्द्रभूत आत्मन्येव पर्यवसानं सम्पद्यते। विशालस्यास्य विश्वस्य सर्वतः परिगणने मुख्यकेन्द्रमात्मेति मत्वा वात्सल्यपूरितहृदया मातृ-तुल्या श्रुतिरनेकसंसारदुःखग्रस्तान् क्लेशासहिष्णून् जनान् दृष्ट्वा सकल-दुःखजिहीर्षयोपदिशति—"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति। एवञ्च भारतीयाध्यात्मिकविचाराणां परिगलितं फलमिदमेव 'आत्मानं विजानीहि' इति। तथा यूनान (यवन) देशीय-मान्यमहापुरुषस्य महावाक्यमिदमस्ति 'Know thyself' आत्मनः साक्षात्कार एव कलात्मकचिन्तनप्रवाहस्य रसात्मकरचनाधारायाश्च मूलं स्रोतोऽस्ति।

महाकविकालिदासविरचितमेघदूतकाव्यस्याध्यात्मिकरहस्यमिमं विषय-मतिसुन्दररीत्या स्फोरयति। आनन्दमये स्वर्लोके जीवोऽयमतिसुखेन स्वकीयं जीवनं यापयति, अथवा नित्ये वृन्दावने रसिकोत्तंसेन भगवता श्रीकृष्णेन सह लीलानिमग्नः सन् तन्मयताञ्चानुभूयात्मानं विस्मरति। अनन्तरं रासमधुरिमाणमास्वाद्य स्वात्मानं कृतार्थं मन्यते च, परन्तु दैवेन विषमकर्मणो विषमपरिणत्या स 'यत्र गावो भूरिशृङ्गा अयासः' इति श्रुतिप्रतिपादितगोलोकादथवा भगवतो विष्णोस्तृतीयक्रमरूपस्वर्गाद् बहिष्कृतो भूलोकमायाति। इयमेव स्वर्गच्युतिः। स्वामिशापग्रस्तो ललितालकातो बहिष्कृतः कालिदासीयो यक्ष आनन्दमयस्वर्गात् पतितानां जीवानां प्रतीकभूतः। स कर्तव्येन साकं प्रेम्णः, विश्वमंगलेन सह स्वात्मकर्तव्यस्य, परोपकारेण समं स्वार्थस्य सम्पादने मानवेन नापराद्ध-व्यमिति सूचयति। ईशवीयग्रन्थतोऽपि ज्ञानफलभोगार्थं निरुद्धेन 'आद-मेन' ज्ञानफलं भुक्त्वा स्वप्रियया सह स्वर्गाद् निष्कासनमन्वभावेति श्रूयते। अस्य निष्कासनस्येदमेव रहस्यम्।

एवं मानवस्य पतनमिवोत्थानमपि सम्पद्यते। उत्थानपक्ष एव मनुष्यत्वं सफलं सम्पद्यते। यदि सर्वसुन्दरशिवाद् वियुक्तो मानवः सततं

तद्वियोगाग्निदग्धः स्यात्तदा तस्य महत्त्वस्य कृत इदं सर्वथानुचितं भवेत्। वियोगः संयोगोपलब्ध्यैव नितरां शोभते। वस्तुतो वियोगो मानवस्याध्यात्मिकोन्नत्या शिवत्वप्राप्तावेका स्वाभाविकी स्थितिरस्ति। परन्त्विमामवस्थामेव परमफलत्वेन मन्वाना आत्यन्तिकीं स्वोन्नतिं कदाऽपि न प्राप्नुयुः पतनोत्थाने, ह्रासवृद्धी, वियोगसंयोगौ चाध्यात्मिकोन्नतेरत्यन्तोत्कर्षाय परमावश्यकतां भजन्ते। यतो यथा वियोगपीडा हृदयमामूलं दहति, तथा अनन्दधामस्मृतिरप्याप्यानन्दानुभवं संस्मार्य शिवसंयोगार्थं जीवमुत्साहयति। वस्तुतो मृत्युं जित्वा अमरत्वप्राप्तिरथवा प्रपञ्चद्वारेण निष्प्रपञ्चभवनं तदैव सम्पद्येत यदा जीवः परमात्मानं ज्ञात्वा स्वात्मानमपि तत्स्वरूपत्वेन विजानीयात्।

वस्तुतो विश्वस्मिन् जगति यावन्ति रचनात्मकानि रसात्मकानि वा कार्याणि विद्यन्ते तानि सर्वाण्यपि परमात्मनः शक्तेर्विभिन्नविचित्ररूपस्फुरणानि सन्ति। परमात्मैव तानि स्वानन्दोपलब्ध्यर्थं निर्मापयति। आत्मन आनन्दरूपतयैवास्मिन् जगत्यानन्दरूपताया विद्यते। आनन्दरूपताया अनुभूत्यर्थमेव चित्रकला-स्थापत्यकला-कविता-संगीतादीनि साधनानि सन्ति। अतो भारतीयसमालोचकाः कलामात्मशक्तिस्फुरणत्वेनामनन्ति। काव्यनिर्माणे एतत्स्फुरणमेव प्रयोजकमित्यपि स्वीकुर्वन्ति। आत्मनः स्वरूपस्फुरणं काव्यस्य जीवातुभूतम्, आनन्दोन्मीलनंमुख्यम्, सुखपूर्वकञ्चतुर्वर्गप्राप्तिर्मुख्यं प्रयोजनमिति च कथयन्ति।

## काव्यप्रेरणा नूतनमनोविज्ञानञ्च

अस्य भारतीयसिद्धान्तस्य समीचीनत्वं ज्ञापयितुमनेकविचारधाराप्रवाहितपाश्चात्त्यमनोविज्ञानसिद्धान्तैः सहास्य तुलना क्रियते। प्राचीनमनोविज्ञानशास्त्रे प्राणिनां नैकविधकार्येषु प्रवर्तिकाः स्वाभाविक्यस्त्रयोदश शक्तयः सन्ति। ताः प्राणिभिः सह जायन्ते, अतो मूलप्रवृत्ति-(Instincts) नाम्ना व्यवह्रियन्ते। ताः स्वयं नैकविधोत्तेजकसाहाय्येनोत्तेजिताः सत्यो नैकविधक्रियासु प्रकाशन्ते[1]। मूलभूतकामवासनारूपैक-

---

१. मैक्डूगल नामकेन प्रसिद्धेन मनोविज्ञानविदुषा 'आउट लाइन आफ् साइकोलाजी', 'इनर्जीज आफ मैन' नामकग्रन्थयोर्मध्येऽस्य मतस्य विवेचनमकारि।

शक्तिवादि 'फ्रायड' रचितनूतनमनोविज्ञानशास्त्रे ( साइको-एनेल्सिस् ) मानवस्य सम्पूर्णेच्छानां क्रियाणां वा कारणमेकैव 'लिबिडो'[1] नामिका मूलशक्तिरस्तीति प्रतिपादितम्, परन्तु तस्य शिष्याभ्यां 'एडलर-युङ्ग' नामकाभ्यामेतां मूलशक्तिमंगीकृत्याप्यस्याः स्वरूपविचारः फ्रायडविचारापेक्षयात्यन्तभिन्नत्वेन विलक्षणत्वेन च प्रत्यपादि। अस्माभिः क्रमेणैतानि मतान्यालोच्यन्ते।

फ्रायडमहोदयः स्वकीयं, सिद्धान्तमित्थं विवेचयति—मानवस्य कार्यविषयिणी या काचित् प्रवृत्तिरस्ति सा सर्वापि स्वतृप्त्यर्थमनेकमार्गरचनाचतुरया कामवासनयैव प्रवर्त्यते। यदा सा साधारणसरलमार्गेण साफल्यं नैव लभते, तदा साऽसामान्यं पन्थानं विरचयति। स च मार्गोऽवरोध[2] मार्गान्तरीकरण-रूपान्तरकरणं[3] शोधरूपैस्त्रिधा भिद्यते। एतैरेव सत्यताया विकासो भवति। एषा कामवासना सर्वत्र विद्यमाना सर्वं व्याप्य तिष्ठति। इमां विश्लिष्य त्रयमपि कथयितुं शक्यते—(१) स्त्रीपुरुषयोः सन्तापफलको दैहिकसंयोगः संभोगेच्छापदेनोच्यते। (२) अन्योन्यं प्रत्याकृष्य प्रेमपूर्वकसंवादादिद्वाराभिव्यक्तो मानसिकः सहयोगो द्वितीयः। (३) बालकान् प्रति प्रेमकरणं तेषाञ्च संरक्षणं तृतीयः प्रकारः। प्रकारत्रयमिदं साधारणाभिव्यक्तिप्रकारेऽन्तर्भवति। सन्तानोत्पत्तिर्गार्हस्थ्यजीवनस्य पर्यवसानमस्ति। मनोविज्ञानशास्त्रज्ञैरुच्यते यदा कामवासना साधारणसरलमार्गेण साफल्यं नैव भजते तदा सा मानवजीवनेऽनेका विशिष्टा विलक्षणाः प्रभाववतीश्च घटना घटयित्वा सर्वस्मिन्नपि लोकव्यवहारे स्वसाफल्यं प्रकाशयति।

कामवासना स्वनिरोधोदात्तीकरणयोरनेकाः कला अभिव्यनक्ति। अधःप्रसृता सत्यर्थादवनता सा संसारेऽनेकप्रकारेण व्यवहारयति मानवम्। सा यदोर्ध्वं प्रसरति परिशोधनम्, उदात्तीकरणम्, 'Sublimation' तदोदेति साहित्यकं जीवनम्। एवञ्च फ्रायडमते

१. Libide

२. Inhibition.

३. Transformation.

भोगविषयकं दैनन्दिनं प्रवाहमवरुध्य यदा कामवासनायाः प्रवृत्तिः कामध्युन्नतां भावनां प्रकाशयितुं प्रवर्तते, तदा कलायाः काव्यस्य बोद्गमो भवति।

आधुनिकप्रगतिवादविचारकाणां काव्यादिकालानामुत्पादिकैका कामवासना अस्ति, या स्वतृप्त्यर्थं काव्यादिकला जनयतीति सिद्धान्तो न स्वीकर्तुं युज्यते। नो चेद् नीतिविरुद्धाचरणशीलाः परस्त्रीव्यभिचारपरायणाः सर्वश्रेष्ठकवयो भवितुमर्हन्ति, परन्तु तैः प्रमाणपदवीमारोपितः फ्रायडमहोदय एव विरोधमुद्घोषयति यत् कामवासनायाः परिशोधनेनोदात्तीकरणेन वा काव्यकला जन्म लेभ इति। अत्र विषये महाकवीनां श्रेष्ठकलाकाराणाञ्च चरितं प्रमाणकोटिमाटीकते।

यद्यपि भारतीयऋग्वेदादिग्रन्थेषु कामवासनायाः प्राबल्यं दरीदृश्यते 'कामस्तदग्रे समवर्तताधि' ( ऋ० १०।१२९।४ ) तथा नासदीयसूक्ते सृष्टिप्रारम्भे कामोदयकथा लभ्यते। एवं यद्यपि वासनारूपेण कामः सूक्ष्मरूपेण सृष्टेर्मूले सर्वत्र व्यापकरूपेण वर्तते, तथापि स एव सर्वत्र कार्यप्रयोजको मूलशक्तिरूप इति मतं नैव युक्तं प्रतिभाति। कलानामांशिकोदये कामप्रेरकत्वसिद्धान्तो युज्यते न तु समग्रांशेषु। यतोऽतिविस्तीर्णस्य मानवव्यवहारस्य प्रेरिकाणामन्यशक्तीनां सत्तां स तथा सत्यपह्नुवीत।

फ्रायडप्रभृतिमनोविज्ञानवेत्तारः काव्यं स्वप्नसमानयोगक्षेमं मन्वते। तथा हि स्वप्नो नामान्तःकरणैकदेशे निहितानामतृप्तवासनानामन्तर्व्यक्तः प्रकारविशेषोऽस्ति। दैनन्दिनबाह्यव्यवहारे सामाजिकदृढप्रतिबन्धेन कदाऽपि साफल्यमप्राप्ता अन्तःकरणैकदेशे दान्ता वासनाः स्वप्नद्वारमवलम्ब्यात्मानमभिव्यञ्जयति। काव्यविषयेऽपि समानमेतद् यतो विशालताभव्यताप्रभृतयो भावना असफलीभूता अज्ञातेऽन्तःकरणैकदेशे अपहतास्तिष्ठन्ति, ताश्च कलात्मकवाक्यद्वारमवलम्ब्य आत्मानं सफलयन्ति; तथा न केवलं कवयितुर्हृदयम् , प्रत्युत श्रोतृहृदयमपि प्रसादयन्ति।

फ्रायडमहाशयस्य काव्यविषयकोऽयं मान्यः सिद्धान्तोऽनेकभ्रामक-युक्तियुतो विचारकोटिमाटीकितुं नैवार्हति। तथा हि स्वप्नकाव्य-विषयौ बाह्येन्द्रियगोचरौ न भवत इत्येकं सादृश्यं परित्यज्य सर्वथा स्वात्मानं भिन्तः। स्वप्नेऽनुभूताः पदार्थाः प्रत्यक्षवत् स्पष्टाः प्रभावो-त्पादकाश्च भवन्ति, न तथा कल्पनाप्रसूताः काव्यपदार्थाः। एवं कदाऽ-प्युभयगतपदार्थप्रतीतिर्नैकरूपा भवति। एवमन्यद् महदन्तरमनयोः करुणरसविषये विद्यते। यतः काव्ये करुणरसप्रङ्गा बहवो विद्यन्ते, परन्तु बाह्ये जगति न कश्चित् शोकमभिलषति, यतो हि शोकवासना नाणु-मात्रेणाप्यानन्दमुत्पादयति। शोकवासना दमनार्हा न त्वभिव्यक्त्यर्हा, अतो मनोविज्ञानविदामेतेषां काव्यविषयकः सिद्धान्तः कथमपि ग्राह्य-कोटिं नाटीकते[1]।

अतः फ्रायडमहोदयमनुगमन्नपि तच्छिष्यः 'ऐडलर' महोदयः कामवासनायाः सर्वकार्येषु नितान्तं प्रेरकत्वं नाङ्गकरोति। साऽन्यत् कथयति प्रभुत्ववासना मूलशक्तिरस्ति, यया सर्वापेक्षया स्वव्यक्तित्वो-त्कर्षविशिष्टयाऽन्यान् तिरस्करोति मनुजः प्रतिमनुष्यमस्ति कश्चिद् व्यापको दोषः, येन समाजे स महत्त्वहीनः परिगण्यते। अतस्तस्य मनः सर्वदा तेनावमानेन पीडितं सत्तद्दोषं नितान्तमाच्छाद्य तद्विरुद्धं गुणं सम्पादयितुं प्रयतते। सर्वासां सांसारिकप्रवृत्तीनामिदं मूलं कारणम्। अस्य सिद्धान्तस्योत्तमो दृष्टान्तो यवनदेशीय (यूनान) वक्तुः 'डमास्थि नीज्' महोदयस्य चरितम्। स 'एथेन्स' नगरस्य सर्वोत्कर्षसमयेऽ-जनि। बाल्ये काले स भ्रस्तवाचा वदति स्म। तद्दोषपरिहारार्थं तेनेत्थं प्रयतितं येन स तत्काले सर्वश्रेष्ठवक्तॄणां मूर्धन्यः समजायत। ऐडलर-महोदयः प्रभुत्वशक्तेः तुल्यकोटिकां काञ्चनाप्यन्यां प्रभावशालिनीं शक्तिं न मनुते। अत एव तस्य मनोविज्ञानं व्यक्तिमनोविज्ञानमिति नाम्ना प्रसिद्ध्यति।

अयं सिद्धान्तः केषुचिद् देशेषु सुयुज्यते, यतः स्वदोषनिरासार्थं बहुभिरलौकिकानि कार्याणि समपादिषत। स्वपत्नीतिरस्कारपराहतेन

---

१. आचार्यरामचन्द्रशुक्लविरचितरससीमांसा (पृ. २९३-२९) द्रष्टव्या।

श्रीमता गोस्वामिना तुलसीदासेन स्वचरितदोषनिरासार्थं कियद् महत्कार्यं सम्पादीत्यस्य सिद्धान्तस्य स्फुटमुदाहरणम्, परन्तु दोषजहीनताग्रन्थिनिवारणार्थं न सर्वाः प्रवृत्तयः स्वात्मानं लभन्ते[१]। विशाले संसारे सन्त्यनेके पुरुषाः, येषु हीनताविरोधिनः स्वभाविका उदात्तग्रन्थयो विद्यन्ते[२]। एतेषां स्वाभाविकप्रवृत्तिमूलकानुपपत्तिरेवास्मिन् ऐडलरमते महान् दोषः।

अनयोर्मतयोरसामञ्जस्यं दृष्ट्वा प्रसिद्धमनोविज्ञानविदा 'युङ्ग' महोदयेन नूतनः पन्थाः प्राकाशि। तेन सर्वे मानवा बहिर्मुखान्तर्मुखप्रकाराभ्यां व्यभज्यिषत। बहिर्मुखपदेन (एक्स्ट्रावर्टेड) त एव परिगण्यन्ते येषामन्तःकरणवृत्तिः सदैव सांसारिकभोगविलासेष्वासज्जति। अन्तर्मुखशब्दबोध्यानां (इन्ट्रावर्टेड) सर्वदैवान्तःकरणवृत्तिर्बाह्यविषयेभ्यः परावृत्यान्तर्भूय च शान्तिमन्विष्यति। युङ्गमहोदयश्चेतनाचेतनभेदेन मनो द्विधा विभज्य तयोर्वास्तविको विरोध इत्यपि विवेचयति विवृणोति च स्वीयं सिद्धान्तमित्थम्। बहिर्मुखपुरुषस्य मनोऽत्यन्तं प्रसीददप्यचेतनं तावदेवाप्रसन्नं दुःखयुतञ्च विद्यते; अन्तर्मुखमनुजस्य चेतनं मनोऽलसं दुःखयुतञ्च सदुदास्ते, परन्तु तस्यान्यदचेतनं मनोऽत्यधिकप्रसादयुतं शान्तं च वर्तते। अस्या वास्तविकस्थितेर्नामधेयं युङ्गमहोदयेन ( Mental Gompensation ) मानसिकसमीकरणमिति प्रत्यपादि। एवञ्च मानसिकवृत्तयो मानवस्य प्रगतिमप्रगतिं वा प्रदर्शयेयुः; तथापि तासामपूर्णमानवजीवनस्य पूर्णताप्रापणमेव मुख्यमुद्देश्यं समस्ति।

हेडफील्डनामा मनोविज्ञानवेत्ता मानसिकविकासस्य पूर्ण आत्मसाक्षात्कार एव मुख्यं लक्ष्यं मनुते। तस्य स्वकीयमतमित्थम्—प्रत्यभिलाषं पूर्णतया स्वातन्त्र्येण चाभिव्यक्तिविकास-

---

१. Inferiority Complex.

२. Superiority Complex.

श्चेति[1] स एतद्विवेचयतीत्थं प्रकारेण यावत्पर्यन्तं मनुजस्य मनोऽन्तर्विभागे बाल्यकालिकाः प्रौढकालिका वा या असफला अभिलाषा वर्तन्ते ताश्चेतनं मनः सम्प्राप्य ( सबलान्तःकरणवृत्ति ) स्वात्मनः साफल्यं न भजन्ति, तावत् तस्य मानसिको विकासोऽपूर्णस्तिष्ठति। एवमात्मसाक्षात्कारः पूर्णो न भवितुमर्हति। आदर्शपुरुषाणां जीवनचरिते वैयक्तिकसुखादिविषयकेच्छानां तथा पारमार्थिकभावानां पूर्णमैकरूप्यमस्ति। श्रेष्ठः पुरुषो न केवलं ज्ञानमुपास्य सांसारिकसुखेच्छां तिरस्करोति, एवं सांसारिकपदार्थानत्यधिकं संसेव्य न ज्ञानमवरुन्धे, प्रत्युत ज्ञानभावयोर्विचारेच्छयोश्च तथा पूर्णं विकासं करोति यथा समष्टि न विरुन्ध्यात्। पूर्णतायाः प्राप्त्यर्थं व्यक्तेरचेतनमनसो भावस्य ज्ञानं प्रकाशनं च न केवलं पर्याप्नोति, किन्तु समष्टेरचेतनमनसो ज्ञानं तदनुकूलाचरणमप्यपेक्षितम्। आत्मसाक्षात्कारार्थं हेडफील्डमहोदय उपदिशति—( १ ) स्वात्मानं विजानीहि; ( २ ) स्वात्मानं स्वीकुरु; ( ३ ) स्वात्मनि तिष्ठेत्। एवं चात्मज्ञानं सम्पाद्य तज्ज्ञानानुकूलं स्वजीवनकाले स्वाचरणं सम्पादनीयमित्येव व्यक्तेर्मानसिकविकासस्य मुख्यं साध्यम्।

युङ्गप्रोक्तसिद्धान्तानुसारमात्मसाक्षात्कारवृत्तिरेव कलायाः काव्यस्य च प्रेरिका। कला व्यक्तेर्मानसिकविकासानामन्यतमः प्रकारोऽस्ति। अतो व्यक्तेर्मानसिकविकासस्य पूर्णता तदैव सम्पद्येत यदा स आत्मसाक्षात्कारं कुर्यात्। पूर्वनिर्दिष्टभारतीयमतानुकूलमिदं मतमस्ति, परन्त्वस्मिन्नपि सिद्धान्तेऽनेके विचारणीया अंशाः सन्ति। वयं त्वित्थमनुभवामो यदाधुनिकमनोविज्ञानं कलाप्रेरणाशक्त्यन्वेषणपरं सदतिप्राचीनं भारतीयर्षिप्रोक्तं सिद्धान्तं बलादङ्गीकुर्यादिति।

---

1. Seli realisation—That is to say, the complete and full ex, ression of all the instincts and impulses within us cannot be achieved so long as there are elements in our soul that are expresseed and denied expressions. In a full realifed self there is no conflict of purpose. no complexes, no repression, but harmonious expression of all the vital forces towards a common purpose and end. —Hadfield, Psychology and Morals, p. 77.

## कलायां व्यक्तित्वस्य स्थानम्

प्रसङ्गतोऽत्रेदं विचारणीयमापतितं यत् कलायां काव्ये वा कलाकारस्य कवेर्वा कियान् प्रकाशः प्रभुत्वं च वर्तत इति। पूर्वोक्तविवेचनेनेदं स्पष्टं प्रतिस्फुरति यद् भारतीयविचारकदृष्ट्या काव्ये कवेर्व्यक्तित्वस्य रामणीयकत्वं केवलं न वर्तते, किन्तु तस्यात्मनः सम्पूर्णः प्रभावः प्रकाशते। तत्र बाह्यसामग्र्या आश्रयस्तज्जन्यं बन्धनं च न तिष्ठति। अयमभिप्रायः—

काव्ये व्यक्तित्वविषये परस्परविरुद्धमतद्वयं पाश्चात्त्यविदुषां प्रचलति। एके कलाकाराणां व्यक्तित्वस्य कलायां काव्ये वा पूर्णो विकासोऽस्तीत्यभिप्रयन्ति; अन्ये पुनः कलायां तत्कर्तुर्व्यक्तित्वस्य सर्वप्रकारेण तिरस्कारं परिहारञ्चामनन्ति। पाश्चात्त्यविचारकैरस्मिन् विषये कलातत्कर्त्रोश्च विशिष्टा स्थितिः समालोचि। 'ब्रेडले' महोदयः कथयति—कला न वास्तविको जगतोऽशोऽस्ति, न वा वास्तविकनुकरणमपि। कलाया जगत् स्वयं पूर्णं स्वतन्त्रं स्वाधीनं विलक्षणञ्चास्तीति। अन्यः समालोचकः 'क्लाइमबेल'-महाशय इमं सिद्धान्तमनुकृत्य वदति यत् कस्यचित् कलावस्तुनो रसाननुभवितुं न जीवनस्यापेक्षा, न वा जीवनस्य विचारैर्घटनाभिर्भावनाभिर्वा सह परिचयस्यावश्यकता वर्तते। अस्य मतस्यानुमन्तारः कलानुभूतिं सांसारिकसर्वानुभूत्यपेक्षया विशिष्टां विलक्षणाञ्च मन्यन्ते। वस्तुत इदमेकदेशिमतमस्ति, न वास्तविकम्।

भारतीयसाहित्यशास्त्रे कवयितुर्व्यक्तित्वस्याभिव्यक्तिः सर्वांशरूपेण नांगीकृताऽस्ति। भारतीयरसशास्त्राणां प्रधानं लक्ष्यम्, श्रव्यकाव्यपाठकानां दृश्यकाव्यदर्शकानां वा रसोपलब्धिकरणमेव। पाठकश्रोतारौ भारतीयरसशास्त्रे 'सामाजिक' पदेनोच्येते। सामाजिकस्य सर्वसमाजप्रतिनिधिभूतस्य हृदये रसोन्मीलनकरणमेव कवेः प्रधानं लक्ष्यम्। स्वानन्दानुभवकरणेन सह सम्पूर्णसमाजस्य मंगलाय हिताय महनीयोपदेशार्थञ्च कविः सततं प्रयतते। काव्ये तस्य सत्त्वं प्रस्फुरदपि तत्संकीर्णं भूत्वा न परत्वं विरुध्यते। इदं तात्पर्यं काव्ये कवेर्व्यक्तित्वं कदापि

न समष्ट्या सह कथमपि विरुणद्धि। भारतीयसंस्कृतौ सर्वदैव व्यष्टि-समष्ट्योः रामणीयकं सामञ्जस्यो वर्तते। यथा भारतीयो धर्मो व्यक्त्या आध्यात्मिकोन्नतिसन्देशं ददत् समाजहिताय जागर्ति, तथा भारतीय-साहित्यमपि व्यक्तिसमाजयोर्मंगलं सम्पाद्योभयस्वार्थसमीकरणार्थं प्रवर्तते। एवं कवेर्व्यक्तित्वद्वारा समाजः काव्यसाधनं सम्पाद्य स्वसुन्दर-रूपं समुपस्थापयति। भारतीयः कविः स्वकृतिद्वारा कदाऽपि समाजं नोपेक्षते। व्यावहारिकजगतः सुख-दुखाद्यनुभवितृलौकिकपुरुषापेक्षया कलाकारेऽस्त्येव विशेषः, यस्य व्यक्तित्वं साधारणीकृतं भवति। अर्था-त्कलाकारः स्वस्वार्थविचारं परित्यज्य स्वीयानुभूतिं साधारणरूपेण गृह्णाति। स्वीयां तां रसानुभूतिं स्वात्मीयत्वेनागृहीत्वा सर्वसाधारणी-कृत्य च सरसमंगलसाधिकां कलाकारकृतिं मनुते। कलाकारस्यानेन साधारणीकृतव्यक्तित्वेन काव्ये सार्वजनीनता सार्ववर्णिकता च सदैव प्रस्तूयते।

पाश्चात्त्यसमालोचकानामपीदमेव मतमत्यधिकमभिमतं दृश्यते। प्रसिद्धसमालोचकः 'रीचर्डस' महोदयः कलात्मकानुभूतिं विलक्षणनूत-नानुभूतित्वेन न स्वीकरोति, किन्तु तां साधारणानुभूतीनां संकलनं मन्यते। अत्र वास्तविकं तथ्यमिदं स्फुरति—कलाकर्तुर्व्यक्तिः स्वदृष्ट्या कलात्मकरचनायाः समीक्षासमालोचनं न समञ्चति; व्यक्तित्वन्तु स्वयमेकं द्वारमस्ति, येन तद् वस्तु व्यक्तं भवति यद् बाह्यजीवन-पदेनोच्यते। समाजस्य यादृशी स्थितिर्भवति, यथा वा निर्माणमस्ति तथैव कलाकारनिर्माणस्य तदुपादानं भवति। अत एव साम्प्रतिकाः पाश्चात्याः समालोचकाः कलाकर्तुर्व्यक्तित्वं महत्त्वेनाविशिष्येतिहासं समाजञ्च विशिषन्ति। आधुनिकः सुप्रसिद्ध आङ्ग्लदेशीयः कविः 'इलियट' महोदयस्त्वेतावत्पर्यन्तं कथयति यत् कविता कलाकारव्यक्तित्वं नाभिव्यनक्ति, किन्तु तस्य व्यक्तित्वं निराकरोति (Poetry is not the expression of personality, but an escape from personality)। अस्य तात्पर्यमिदमस्ति,—सुयोग्यः कलाकारो जीवनस्य विशालतां च परिपश्यन् तत्कृते स्वव्यक्तित्वं सर्वथा तिरस्करोति। यदि काव्यं स्वत्वं प्रति सर्वस्वं विजयतेतरामित्युद्घोषयतीति कथ्यते तदा

तत्कथने नात्युक्तिदोषसंस्पृष्टं भवेत् । अभिव्यंजनमेव कलाया उद्देश्यम्, तथा व्यक्त्युद्गारस्य स्थाने विश्वानुभूतीनां निवेशनं विनाभिव्यञ्जनां नात्मानं सम्पिपर्ति ।

एवं चेदं फलति यत् कलायां मानवजीवनधारा वहति । समाजस्थ प्राचीनाया वर्तमानायाश्च परम्परायाः सर्वतो भिन्नं जगत्कलायाः कृते न विद्यते । कलाकारः समाज एवाजनि, स समाजत एव स्वविचारोद्-बलकान् पदार्थान् गृह्णाति । स स्वीयसंकुचितव्यक्तिक्षेत्रतो विचारान् भावनाश्चोन्नतिपथं नीत्वा विश्वक्षेत्रेण सह सामञ्जस्यं स्थापयितुं प्रयतते । अस्यां स्थितौ भारतीया आलोचकाः कलां कलाकर्तुः सीमित-व्यक्तित्वाभिव्यक्तत्वेन न मन्वते; प्रत्युत कलाकर्तुर्व्यक्तित्वं तादृशं मन्यन्ते यत् सम्पूर्णविश्वेन सह सामंजस्यमतिष्ठिपत् । एतादृशकला-कर्तुः कृतिः सर्वजनसुखाय तथा सर्वजनहिताय सुतरां भवतीति निश्चितमेव ।



## ३०. प्राचीनं नाट्यशास्त्रम्

नाट्यशास्त्रस्य विकासोऽध्ययनं चास्मिन् भारतेऽतिप्राचीनकाले एव सम्पन्नमभूत्। विभिन्नैरालोचकैर्नाट्यस्यैव स्वस्या आलोचनायाः केन्द्रबिन्दुत्वमंगीकृतम्। कश्मीरवास्तव्या आलोकशिरोमणयोऽभिनवगुप्तपादा औचित्यस्य रसपरिपाकस्य च दृष्ट्या नाटकस्यैव समस्तवाग्विभूतिष्वग्रगण्यत्वं स्वीकृतवन्तः। दशरूपकात्मकस्य काव्यस्यैव निखिलकाव्यप्राधान्यमिति तेषामभिमतम्—काव्यं तु मुख्यतो दशरूपकात्मकमेव' इति। अस्तु, इयत्तु, निर्विवादं यदालोचनाजगति नाट्यालोचनमेव श्रव्यकाव्यापेक्षया प्राचीनतरम्। अलंकारशास्त्रस्याध्ययनं पुरा नाट्यशास्त्रस्योपाङ्गत्वेनैव सम्पद्यते स्म। नाट्यं विविधकलानां समुचितसंविधाने सत्येव याथार्थ्येन सिध्यति। अत एव प्राचीनं नाट्यशास्त्रमेषामुपादेयप्रकाराणामपि विशिष्टं विवरणं प्रस्तौति।

### प्राचीना नाट्याचार्याः

अद्यत्वे प्राक्तनेषु नाट्याचार्येषु भरतमुनेरेव ग्रन्थः समुपलभ्यते, किन्तु तस्यालोचनमस्मानिममेव निष्कर्षं नयति यद् भरतनाट्यशास्त्रमनेकस्याः शताब्द्या अध्ययनस्यानुशीलनस्य च परिणतिरिति। विक्रमपूर्वाष्टमशताब्द्यां पाणिनिनिर्दिष्टौ शिलालिकृशाश्वावेवास्माकं प्राचीनतमौ नाट्याचार्यावास्ताम्, किन्त्वेतत्प्रणीतनटसूत्रयोरद्यावधि न काप्युपलब्धिः। कोहलनामक एको मनीषी नाट्याचार्य आसीत्, येन भारते वर्षे नाट्यस्य लोकप्रियं सम्पाद्य कमनीया कीर्तिरर्जिता। अस्य महानुभावस्य विशिष्टसिद्धान्तानां निर्देशो नाट्यसंगीतयोर्ग्रन्थेषु भूरिशः कृतो विद्यते। वर्तमानस्य भरतनाट्यशास्त्रस्य संवर्द्धनोपबृंहणयोः कोहलस्यापि विशिष्टो योग आसीत्। अत्र प्रमाणमभिनवगुप्तस्याभिनवभारतीनाम्नी भरतनाट्यशास्त्रटीकैव। भरतमतानुसारं नाट्यस्य पञ्चैवाङ्गानि। तद्यथा—त्रिप्रकारोऽभिनयः—गीतम्, वाद्यं च

(आतोद्यम्), परन्तु कोहलमते नाट्यस्यैकादशाङ्गानि भवन्ति। अस्य मतस्य प्रवेश आधुनिके नाट्यशास्त्रेऽपि दरीदृश्यते। तथा हि—

रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः[1]॥
(नाट्यशास्त्रम् ६।१०)

अत्र एकादशाङ्गा निर्देशः स्फुटं परिलक्ष्यते।

एतानतिरिच्य वात्स्यशाण्डिल्यधूर्तिला नामशेषा एवाद्यत्वे। प्राचीनस्य नाट्यशास्त्रस्य स्वरूपदिग्दर्शक एक एव ग्रन्थो नूनमवशिष्टः, यं ग्रन्थ इत्यनुक्त्वा ग्रन्थराज इति वक्तव्यम्। भरतनाट्यशास्त्रं भारतीयललितकलानां विश्वकोषोऽस्ति। इदं शताब्दीनां साहित्यिकोद्योगस्य सत्प्रेरणायाश्च दिव्यः परिणामः। अस्मिन् सूत्रभाष्यकारिकारूपः क्रमिको विकासः संलक्ष्यते। मूलग्रन्थः सूत्रात्मक आसीत्, तस्योपरि कालान्तरे विशदं भाष्यं प्राणीयत। अस्य भाष्यांशस्य परिचयोऽस्माभी रसभावप्रतिपादकयोः षष्ठसप्ताध्याययोरुपलभ्यते। ग्रन्थस्य भूयिष्ठोंऽशः कारिकासु निबद्धः। शारदातनयस्य कथनानुसारं भरतनामकौ द्वावाचार्यावास्ताम। वृद्धभरतेन द्वादशसहस्रश्लोकेषु नाट्यस्य निरूपणमकारि, यस्य संक्षेपो भरतमुनिना षट्सहस्रश्लोकेषु समपादि। वर्तमानस्य नाट्यशास्त्रस्य षट्सहस्रश्लोकात्मकत्वादेव 'षट्साहस्री संहिता' इति तस्यापरं नाम।

## नाट्यस्योत्पत्तिः

भारते ललितकलानामाविर्भावोऽतिप्राचीनकालादेव संजात आसीत्। नाट्यस्योत्पत्तिर्भारतीयप्रतिभाया एव विशिष्टो विलासः। अद्यत्वेऽपि मानसदासतापराभूतानां तादृशानां विदुषां न्यूनता देशे

---

१ अभिनयत्रयं गीतातोद्ये चेति पंचाङ्गं नाट्यम्। ...अनेन तुश्लोकेन कोहलमते एकादशांगत्वमुच्यते, न तु भरते—अभिनवभारतीय खण्डः १, पृ० २६)

नास्ति ये भारतीयनाट्यस्योपरि यवननाट्यस्य प्रभावं स्वीकुर्वन्ति। वस्तुतस्तु भारतीयमनीषिणां प्रभविष्णुप्रतिभाबलेनैव नाट्यस्योत्पत्तिर्भारतवर्षस्य पुण्यभूमावेवाभूत्। नाट्यं वेदतुल्यमेव उपादेयमथ च मानवजीवनस्य कल्याणकारि शास्त्रम्। चतुर्भिर्वेदैरेकैकेन प्रधानोपकरणेन प्रणीतोऽयं नाट्यवेदो देशवर्णयोः सीमितपरिधिमतिक्रम्य समस्तजनानां हृदयावर्जनेन कृतार्थयत्यात्मानम्। भरतानुसारं ब्रह्मणा ऋग्वेदात् पाठ्यम्, सामवेदाद् गीतम्, यजुर्वेदादभिनयम्, तथाथर्ववेदाद् रसं चादाय नाट्यवेदनामको नवीनो वेदो निर्मितः। तदुक्तं भरतमुनिना—

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥

( नाट्यशास्त्रम् १।१७ )

इत्थं भारतीयालोचनानुसारं नाट्यं नाम सा कला यस्यामभिनयेन साकं पाठ्यस्य योगो वरीवर्ति, तथैव गीत्या सह रससन्निवेशस्तिष्ठति। नाट्यस्य मुख्यं लक्ष्यं मानवहृदयावर्जनेन सममुदात्तीकरणं नाम। नाट्यस्योद्देश्यं च परिधिसीम्न्यनाविद्धतया सर्वविधमानवकल्याणसाधनम्।

नाट्यं धर्मप्रवृत्तान् मानवान् धर्ममुपदिशति। क्लैब्यापन्नानां हृदि समुत्साहं फूत्करोति। दुर्विनीतान् निग्रहं शिक्षयति। वेदनाविकलचेतसां हृदि सुखशान्त्योश्च लेपं लिम्पति। भिन्नवृत्तीनां व्यक्तीनां चेतांस्याराधयितुं यदि नाम किञ्चिदेकं शास्त्रं मृग्येत तर्हि तन्नाट्यशास्त्रमेव। नाट्यकलायां प्रवीणस्य प्रेक्षावतः कालिदासस्येयमुक्तिर्यावती मार्मिकी तावती विशदाऽपि—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं।
रुद्रेणेदमुमाकृतव्यतिकरे स्वांगे विभक्तं द्विधा ॥
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते।
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

( मालविकाग्निमित्रम् १।४ )

अतिप्राचीनकाले नाट्याभिनयो बहिराकाशदेश एव समजायत। तत्र नानाविधेषु विघ्नेषु समुपस्थितेषु रंगमञ्चस्याविर्भावः समजनि। नाट्यशास्त्रे प्रेक्षागृहस्य सुविस्तृतं विवरणं समुपलभ्यते। प्रेक्षागृहस्य विकृष्टचतुरस्रत्र्यस्रनामानस्त्रयः प्रकारा आसन्। एषु विकृष्टो विस्तृते आसीत, यस्मिन् देवसम्बद्धानि दृश्यानि प्रदर्श्यन्ते स्म। चतुरस्रस्तु स्पष्टमेव चतुष्कोणः परिमाणे मध्यमाकारश्चासीत्। स च विशिष्य नृपादीनां कृते निश्चित आसीत्। त्र्यस्रस्त्रिकोणाकारकः प्रेक्षागृह आसीत्, यो हि परिमाणे सर्वापेक्षया लघुकायः साधारणजनानां कृते विहितश्चासीत। प्रेक्षागृहनिर्माणविषये भरतमुनिः सातिशयं वैज्ञानिकोऽस्ति। तन्मते प्रेक्षागृहस्य विस्ताराधिक्यं नितान्तमनुचितम्, यतो हि विस्तृते प्रेक्षागृहे उच्चारिताः शब्दा दर्शकैः सम्यक् श्रोतुं न शक्यन्ते। सुश्राव्यता नाट्यस्य प्रधानो गुणः। तस्य च सिद्धिर्मध्याकाराणां प्रेक्षागृहाणामस्तित्वमाश्रयति। तदुक्तं भरतेन—

मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारितस्वरम्।
अनभिव्यक्तवर्णत्वाद् विस्तरत्वं भृशं व्रजेत्॥

(नाट्यशास्त्रम् २।२२)

अर्धं प्रेक्षागृहं तु दर्शकेभ्यः सुरक्षितं स्थाप्यते स्म। अर्धं च नाट्यस्य कृते निश्चितमासीत्। अस्याप्यर्धभागो रङ्गमंच इत्युच्यते, यत्र ह्यभिनयादिर्निष्पाद्यते। पृष्ठतमो भागो रङ्गशीर्ष इति नाम्नाऽभिधीयते। अत्रैव नटानां नेपथ्यविधानमभवत्। प्रेक्षागृहस्य विभिन्नस्थानेषु विभिन्नदेवतानां स्थापनं मुख्यं कार्यमासीत्। इदमारम्भिकं पूजनं पूर्वाङ्गमित्यभिधीयते स्म। अथ चैको विस्तृतः कार्यव्यापारः प्रचलति स्म, यस्यान्तिमोंऽशोऽद्यापि संस्कृतनाटकेषु नान्दीति नाम्नाऽवशिष्टः। नान्द्यन्त एव सूत्रधारादिपात्राणां प्रवेशः। पूर्वरङ्गस्यावसाने श्रोतृणां हृदयावर्जनार्थं संगीतसंविधानम् यत्रोच्चरिता गीतिर्ध्रुवेति नाम्ना विश्रुता। ध्रुवाख्याया गीतेः पंच भेदाः—उत्थापनी, परिवर्ता, अपकृष्टा, अक्षिता, विक्षिप्ता चेति। आसां गानं विशिष्टस्वरेण विशिष्ट

लयमात्राभिश्च सम्पद्यते । आस्वन्यतमाया उत्थापनीध्रुवाया उदाहरणं यथा—

देवं विभुं त्रिभुवनाधिपतिं कैलाशपर्वतगुहाभिरतम् ।
शैलेन्द्रराजतनयादयितं मूर्ध्ना नतोऽस्मि त्रिपुरान्तकम् ॥

## अभिनयः

अधुना प्राचीनकालिकस्याऽभिनयस्य चर्चा विधीयते । आङ्गिकवाचिकाहार्यसात्त्विकभेदेनाभिनयश्चतुर्धा । चतुर्भिरेभिरभिनयैः प्रस्तुतं कथावस्त्वेव दर्शकानां समक्षमाभिनेयं याथार्थ्येन प्रकटयति, अथ च तेषां मनोरञ्जनमपि करोति ।

( १ ) आङ्गिकोऽभिनयो दृष्टिमुखहस्तपादादिभिर्विधीयते । भरतेनायं तथा साङ्गोपाङ्गं विवृतो यदद्यत्वेऽपि वैज्ञानिकयुगे तस्य वैलक्षण्यं वैचित्र्यं च स्फुटं प्रतीयते । हस्तैः प्रस्तुतानामभिनयानां न पञ्चषाः प्रकारा एव, प्रस्तुतानामभिनयानां न पञ्चषाः प्रकारा एव, प्रत्युताष्टोत्तरशतसंख्याकाः । एषामङ्गहाराणां स्वरूपज्ञानमप्यद्यत्वे दुःशकं स्यात्, परन्तु त्रयोदशशताब्द्यां वर्तमानो दक्षिणभारतस्य शासको राजा राजसिंहो धन्यवादार्हः, येन चिदम्बरस्थस्य सुप्रसिद्धशिवमन्दिरस्य गोपुर एषां निखिलानां करणानामुत्किरणं नाट्यशास्त्रस्यावश्यकश्लोकैः साकं सम्पादितम् । इमान्यद्यापि मन्दिरसुषमां संवर्द्धयन्ति । दर्शकहृदि रसोन्मीलनमेव नाट्यस्य प्रधानं लक्ष्यम् । अस्मिश्च कर्मणि नेत्रविधानमतीव साहाय्यमाधत्ते । भरतेन षट्त्रिंशत्प्रकारिकाणां रसभावोद्बोधिकानां दृष्टीनां विवरणं स्वग्रन्थे प्रदत्तम्, याभिरभिनेतॄणां मनोभावाभिव्यक्तिः स्पष्टतया दर्शकैरुपलभ्यते ।

( २ ) वाचिकेऽभिनये नटानां पात्राणां च पाठ्यविधानं तिष्ठति । पाठ्यमुखेनैव कोऽप्यभिनेता स्वभावानामभिव्यनक्ति तथान्यपात्रैः साकं कथनोपकथनयोः प्रवर्तते । अत एव भरतेन पाठ्यं नाट्यशरीरं स्वीकृतमस्ति । अत्र चास्मिन् कार्ये विशेषो यत्नो विधेय इति तदीयं मतम्—

वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता।
अङ्गनेपथ्यतत्त्वानि वागर्थं व्यञ्जयन्ति हि॥
(नाट्यशास्त्रम् १५।२)

संस्कृतप्राकृतभेदेन पाठ्यं द्विविधम्—अभिजातपात्राणां भाषा संस्कृता, नीचपात्राणां च प्राकृता भवति। नाट्यस्य पाठ्यं कवितामयं भवति। अतस्तदर्थं दोषपरिहारो गुणालङ्कारसंग्रहश्चावश्यकौ भवतः। औचित्यविधानेऽभिनयसर्वस्वं निहितमस्ति। यद्वस्तु यत्प्रकारकं भवति तस्य तत्प्रकारेणैव प्रदर्शनमौचित्यस्यान्तःपरिधौ परिगण्यते। भरतस्य विधानमतीव साहित्यिकं सरसमुपादेयं चास्ति—

वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः।
गतिप्रचारानुगतं हि पाठ्यं पाठ्यानरूपोऽभिनयश्च कार्यः॥
(नाट्यशास्त्रम् १४।६८)।

आहार्याभिनये वेषभूषयोराभूषणस्य च विधानं भवति। आभूषणाधिक्ये नटः श्रान्तो भवति। अत एव गुरूणां स्वर्णभूषणानां स्थाने लाक्षापूरितान्याभूषणान्येव नाट्योपयोगिनि। इदं वर्णनं प्रयोगज्ञस्यार्यस्य विशालदृष्टेः सूचकम्—

गुर्वाभरणसन्नो चेष्टां न कुरुते पुनः।
गुरुभारावसन्नस्य स्वेदो मूर्च्छा प्रजायते॥
तस्मान्न सम्यक् च कृतं सौवर्णं भूषणं भवेत्।
जतुपूर्णालपरत्नं तु न खेदजननं भवेत्॥
(नाट्यशास्त्रम् २३।४७-४८)

अस्मिन् प्रसंगे श्मश्रुविधानमपि क्रियते। प्राचीनभारते श्मश्रुधारणप्रथा बाहुल्येनासीत्। अत एव रंगमञ्चावतीर्णानां पात्राणां वेषं सभाजयितुमपेक्षितश्मश्रुधारणस्याऽपि विशिष्टो नियम आसीत्।

(४) सात्त्विकोऽभिनयोऽन्तिमोऽस्ति, यस्मिन् स्त्रीपुरुषाणां नानाचेष्टा हावभावहेलादयश्च प्रदर्श्यन्ते। नाट्येन सह संगीतस्यापि घनिष्ठः सम्बन्ध आसीत्। संगीतप्रयोगेणाभिनयो नितान्तं मञ्जुलश्च जायते।

अतो यथाऽद्यत्वे तथा पुराकालेऽपि रङ्गमंचे संगीतस्य साम्राज्यमक्षुण्णमासीत् । नाट्यं प्राचीने काले जीविता कलाऽऽसीत् । तदात्वे नाट्यप्रदर्शनस्य नैकविधाः शैल्य आसन्, यासु प्रवृत्त्यपराख्याश्चतस्रः शैल्यो भरतेन निर्दिष्टाः । दाक्षिणात्यप्रवृत्तेः प्रचारो विदर्भेषु ततो दक्षिणदेशेषु चासीत् । अवन्तिकायां वीरशृङ्गाररसयोः प्रदर्शनस्य प्राधान्यमासीत् । पूर्वभारतस्य प्रवृत्तिरर्द्धमागधी, तथा मध्यप्रदेशस्य शैल्याः पाञ्चालीप्याख्याऽऽसीत् । भारतीयनाट्यशास्त्रस्येदं सामान्यं चित्रणम् । एतेनेदं स्पष्टं यन्नाट्यं भारतस्य प्रतिभायाः स्वतन्त्रो विलासः । यवनिकाशब्दमाश्रित्यैव नाट्यस्योपरि 'ग्रीक' प्रभाव उपवर्ण्यते, किन्तु वस्तुगत्याऽसौ जर्वानिकाशब्दो न तु यवनिका प्रयोगो नाट्यस्य साधनम्; दर्शकानां हृदि रसोन्मेषश्च साध्यम् । अस्मिन् व्यवसाये प्राचीनं नाट्यं सर्वदैव समर्थमासीदिति कथनं पुनरुक्तिमात्रम् ।



## ३१. कालिदासः

कालिदासः किल बभूव विक्रमादित्यभूपतेः सभायां नवरत्नेषु मुख्यतमः। प्रायो निश्चिन्वते मनीषिणास्तदीयप्रादुर्भासमय ईसा-प्राग्वर्ती सप्तपञ्चासत्तमो वत्सरः। विश्वविख्यातिभाजनतां स स्वगुणैः प्रतिपेदे। शतशो भवन्ति तत्र सूक्तयो महताम्। 'एतस्मिन्नतिविचित्र-कविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्रिपञ्चैषा वा महाकवय इति गण्यन्ते' इत्यानन्दवर्धनाचार्याः। कालिदासादीनामिव यशः' इति मम्मटभट्टाः। 'कविकुलगुरुः कालिदासो विलासः' इति प्रसन्न-राघवकृतः। भूयांस कवयो विद्वांसश्च विविधविद्याविद एतं सातिशयं स्तुवन्ति। एतदीया शुधांशुधवला कीर्तिरमान्तीव समग्रे भारते पाश्चात्त्यानपि देशान् विलोभनीयैरमलैर्गुणैर्मुखरयाम्बभूव। नहि विद्यन्ते संस्कृतभाषायामधीतिनः केऽपि धरातले संख्यावन्तो य एनं सबहुमानं न स्मरन्ति। सत्यमभिहितं राजशेखरेण—

कस्यापि तिष्ठति कवेर्गृह एव काव्यं
कस्यापि गच्छति सुहृद्भवनानि यावत्।
न्यस्याविदग्धवदनेषु पदानि शश्वत्
कस्यापि सञ्चरति विश्वकुतूहलीव॥

अस्य महाकवेः चत्वारि काव्यानि—ऋतुसंहारमेघदूतकुमारसम्भव-रघुवंशाभिधानानि, नाटकत्रितयी च मालविकाग्निमित्रविक्रमोर्व-श्यभिज्ञानशाकुन्तलनामधेयानि सप्तर्षय इव विश्रुतप्रकाशानि विश्व-विश्रुतानि। यद्यप्यत्र संगिरन्ते समीक्षकाः—नैकस्येमाः सर्वाः कृतयः। देवत्रयीव कालिदासत्रयी किल समजनि। अन्य एव भवितुमर्हति निर्माता कुमारसम्भवस्य परश्च रघुवंशप्रभृतेः। कुमारसंभवस्यापि कतिपय एव सर्गा महाकवेः, अपरे केनचनान्येन संघटिताः, एवमादि। अथापि नात्र दृढतरं प्रमाणं समुपलभामहे। असम्भावना बीजानि गर्भस्रावेण गलितानि जायन्ते समक्षमभियुक्तानाम्। निर्मितयः क्रमेण

परिपाकमासादयन्ति संरम्भभाजनानामपि। परस्परं संवादमासादयन्त्यो रचना आत्मन् एकजनकतां विश्वासयन्त्यकामनापि। संवादाश्चात्र भवन्ति भूरिभूरयो विस्मयावहाः। रसपरिपाकोऽत्र च समुद्भवन् समः सर्वत्र कथमिव निर्माणकौशलमन्यदीयं श्रद्धापयितुमीष्टे।

अस्तु, अयमासीत् स्वाभिमानी कविः। एकदा दाक्षिणात्यानां जानपदानां भ्रमणप्रसङ्गेन कर्णाटकान् संगच्छन् तदभिजना काञ्चन राज्ञीमुपययौ। सापि कवयित्री समभूत्। कवितां कमनीयां विलिख्य सम्मुखमस्य प्रेषयत्। कालिदासमागतं समाकर्ण्य कुतूहलमस्या उदपद्यतेति।

एकोऽभून्नलिनात् परस्तु पुलिनाद् वल्मीकतश्चापर-
स्तेऽभूवन् कवयो यदीयरचनामोदान्विता मेदिनी।
अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत्कुर्वते
तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया॥

महाकविरपि प्रकृत्यनुहारि सद्यस्तरामुदतीतरत्:—

वयं नो ते विप्राः प्रतिदिवसमासाद्य कृपणान्
धनं ये याचन्ते प्रतिविदितनक्षत्रतिथयः।
वयं कार्णाटीनां कुचकलशपाटीररचना
विनोदव्यासंगोल्लसितमतयः केऽपि कवयः॥

गुणाग्राहिणी सन्तुष्टान्तरंगा सा सादरभरं कविशिरोमणिं समवीभवत्।

सार्वभौमो भवतो महाराजो महाकविश्च। एकत्र सर्वस्या भूमेरैश्वर्यं निमित्तं जायते, परत्र सर्वत्र विदितत्वम्। असावपि कवित्वविद्यावैभवेन दिशो विदिशश्च विजयमानो वाराणसीमुपागमत्। नाविद्यत तदानीं तत्प्रतिमल्लः कोऽपि काशिकः कविः। भगवान् श्रीविश्वनाथः स्वपुर्या यशो रक्षत्येव सर्वदेति विश्रुतचरम्। भगवत्पाद आद्यशङ्कराचार्योऽपि चण्डालरूपमास्थाय श्रीविश्वेश्वरेण निरुत्तरतां गमितः। प्रसिद्धयति चात्र मनीषापञ्चकं माधवीये शंकरदिग्विजये। कालिदासः

सुरनिर्झरिणीमणिकर्णिकायामवगाह्य विशश्रामोपरिष्टात्। उपलक्ष्यास्य तात्पर्यं जगदम्बाऽन्नपूर्णा प्रान्तीयवाहिकाभूमिकामादाय स्वर्णकलशीं बाहुनोत्तोलयन्ती गंगामवततार। सलिलसम्भृतां कुम्भीं धारयन्ती, श्रममभिनयन्ती आगम्योपरितनं घट्टकं दृष्टिमितस्ततः संचारयन्ती कालिदासं साधिकं निदध्यौ। विनोदप्रियः प्रकृत्या असौ सर्वमिदं समाकलय्य कवित्वमेकमचञ्चूरयत्।

किं मां निरीक्षसि घटेन कटिस्थितेन।
वक्रेण चारुपरिमीलितलोचनेन॥
अन्यं निरीक्ष पुरुषं निजभाग्ययोग्यं।
नाहं घटांकिततटीं प्रमदां भजामि॥

जगदधीश्वरी तु प्रतिपाल्यमानमेवावसरमुपलभ्य विकुण्ठनीयं प्रतिवचनं कवितैव प्रोद्गूरयत—

सत्यं ब्रवीषि मकरध्वजबाणपीड।
नाहं त्वदर्थितदृशा परिचिन्तयामि॥
दासोऽद्य मे विघटितस्तव तुल्यरूपः।
सोऽयं भवेन्नहि भवेदिति मे वितर्कः॥

किं त्वं न जानासि? अहं साधारणी पानीयवाहिनी न भवामि, भवन्त्येव स्मरशरप्रहारजर्जरहृदयास्त्वादृशा एव विवेकस्पर्शशून्य-हृदयाः। वैधेय! सर्वथा त्वद्विधो मम कुम्भदासोऽद्य विघटितः। सोऽयमेव स्यादिति वितर्कयन्ती निभालयामीति। चित्रवच्चित्रितो न चिराद् भगवन्तं संदृश्य विश्वभर्तारं काशीतो यथागतं प्रातिष्ठत।

महाकवेरेतस्य विस्मयारूढं कौशलं यथा श्रव्यकाव्येषु तथा नाटकेषु। क्वास्य सिद्धहस्तता अतिशेते क्व च विस्फुरति रसेश्वरता विशिषतीति अद्यापि प्रतिभावद्भिर्निर्णेतु नापारि। बभणुः प्रत्यालोचका नाटकान्तं कवित्वमिति। "काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला" इति महानुद्घोषः समुज्जृम्भते। प्रकृतिप्रत्यवेक्षणे, लोकोत्तरचरित्र-चित्रणे, नीतिनैपुण्ये, समाजान्तस्तत्त्वनिभालेन, कल्पनाकौशले,

संगीते, चित्रकलायाम्, दर्शने, साहित्यदर्शने, मितहितभाषणे, मर्यादा-परिपालने, भूगोलपरिज्ञाने, विद्याविस्तरे, धर्मसमीक्षायाम्, पौरुषोज्जृम्भणे, स्त्रीजातिगौरवे, सर्वरसादिव्यञ्जने, समुचितहितोपदेशे च यत्र यत्र गणनीयेषु गुणेषु दीयन्ते दृष्टयः, तत्र सर्वत्रैवायं वाल्मीकिरिव व्यास इव च द्वितीयः स्वं समुपस्थापयति, आत्मानं साक्षात्कारयति। उत्तरोत्तरं धवला कला इव सुधांशोरस्य यशो वर्धते विश्वमेवात्र मुखरीभवति। अवश्यमयमतीव धार्मिकः।

नहि यशः पुण्यैर्विना लभ्यते।

प्रधानं चैतस्य शृंगारः। स हि रसेषु मूर्धन्यः। निरुपदश्चैष शृङ्गारमेव वक्ति, यथा—

अपारे काव्यसंसारे कविरेकः प्रजापतिः।<br>
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥<br>
शृंगारी चेत्कविः काव्ये जातं रसमयं जगत्।<br>
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥

एतस्मै निरूपणावसरे हि सर्वैरेवालंकारिकै प्राथम्यं व्यतीर्यत शृंग प्राधान्यमृच्छति प्राप्नोतीति शृंगार इति इदमीया व्युत्पत्तिः। नारायणदैवतश्चायम्। 'यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृंगारेणोपमीयते उपयुज्यते' इति भरतः। श्रीभोजराजस्तु शृङ्गारप्रकाशे महता प्रबन्धेन, विपुलैस्तर्कैः सहृदयतया च शृङ्गारस्यैव रसत्वं व्यवस्थापयत्। तथा हि तदीयोक्तिः—

शृङ्गारहास्यकरुणाद्भुतवीररौद्र-<br>
बीभत्सवत्सलभयानकशान्तनाम्नः ॥<br>
आम्नासिषुर्दश रसान् सुधियो वयन्तु।<br>
शृङ्गारमेव रसनाद् रसमामनामः॥

करुणश्च भवभूतिना समुपलाल्यमानः शृङ्गार एव विप्रलम्भः। अत एव उत्तररामचरिते पर्यवसाने जानकीसंघटना महाकविना

ऽयधीयत। रामायणेऽपि वनकाण्डादौ स एव विस्तीर्णतां नीतः। करुणप्रयोगः कविभिर्विप्रलम्भे निरूढिमासादितः।

अतएव दशरूपककारस्तत्र भूयो विप्रतिपद्यते। सहृदयशिरोमणिः प्रकाशकारश्च "निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमोरसः" इति वदन् तन्मते विनिवेशयति। अत एव 'अपि' पदं प्रयुङ्क्ते। अश्लीलतां त्वत्र अजानाना उद्भावयन्ति। यतोऽत्र अल्पीयसाप्यनौचित्येन आभासतापदमादधाति। नीचपात्रेषु वर्ण्यमानं निषेधन्ति। गृहस्थाश्रममुद्दिश्य रसोऽयं काव्येषु प्राधान्येन विभाव्यते। गार्हस्थ्याश्रमो यथाश्रमेषु मुख्यस्तथायमपि रसः। उक्तं च महाभारते—

अस्य काव्यस्य (महाभारतस्य) कवयो न समर्था विशेषणे।

विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः॥

शृंगारोत्तरे गार्हस्थ्य एव सर्वाणि कर्तव्यानि पुरुषार्थाश्च पूर्णतया आत्मानं लभमाना यथास्थानं विकसन्ति। अत एव महाकविः शृङ्गारमेवाशिश्रियत्। 'एक एव भवेदंगी शृङ्गारो वीर एव वा' इति नाटके, "शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते" इति च काव्येऽनुशासनात् सामग्र्यन्तराभावाद् भवितव्यमेव इदमीयेषु सन्दर्भेषु शृङ्गाररसप्राधान्येन। न केवलमनुशासनमेव एतदीयान् प्रबन्धानधीयानानामनुभावोऽपि एतद् विशदयति। अङ्गत्वं रसान्तराणां शृंगारस्य परिपोषाय इष्यत एव पार्थिवस्य भृत्यानामिव। आस्तां तावद्। इदमत्र वर्ण्यते— उपमामयमाश्रयति प्रधानतयालंकारेषु। 'उपमाकालिदासस्य' इति प्रसिद्धिर्भूयसी। व्यक्तिविवेककृता महिमाचार्येण उपमोत्प्रेक्षयोस्तारतम्ये श्रैष्ठ्यमधिरोपिता उत्प्रेक्षायाम्। यतस्तत्र सादृश्यं व्यंग्यमुपमायां च वाच्यम्। वाच्यापेक्षाया व्यंग्यस्य वैशिष्ट्यमिति सिद्धम्। ततश्च भवन्ति श्रीहर्षबिल्हणादयो मान्याः कालिदासादिति यद्यपि साम्प्रतम्; तथात्युपमामूलत्वाद् बहीयसामलंकाराणां नैतस्या महनीयता तिरोभावयितुमर्हा। अप्पयदीक्षितोऽपि चित्रमीमांसायां रमणीयतया व्यक्तिसरण्या उपमायाः प्रागल्भ्यं प्रतिपेदे। तथा हि—

उपमैका शैलूषी सम्प्राप्तचित्रभूमिकाभेदान् ।
रञ्जयति काव्यरंगे नृत्यन्ती तद्विदां चेतः ॥

अपि च संविधानविशेषश्चमत्कारोत्कर्षे निदानं न व्यंग्यत्वम् । अत एव गुणीभूतव्यंग्येषु चमत्कारातिशयो वाच्ये सहृदयैरनुभूयते । निधीयतां दृष्टिर्नैषधीयादर्शे—

निवेद्यतां हन्त समापयन्तौ शिरीषकोशम्रदिमाभिमानम् ।
पादौ कियद् दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥
अत्रापि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य ।
त्वदाप्त-संकेततया कृतार्थां श्रव्यापि नानेन जनेन संज्ञा ॥

अत्रावधानं वितरन्तु समीक्षिणः, क्व गच्छसि, कस्ते देशः, किं नामेत्यता व्यंग्ये चमत्कृतिरुल्लसति वाच्ये वेति ? अवश्यं वक्तव्यमत्र वाच्य एवेति । अपि च तत्र तत्र उत्प्रेक्षादयोऽप्यलंकृतयो विनिहिताः कामपि समर्घ्यतामस्य महाकवेः समेधयन्त्येव ।

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥

तत्कर्णमूलमागत्य पलितच्छद्मना जरा ।
कैकेयी शंकयेवाह रामे श्रीर्न्यस्यतामिह ॥

बालेन्दुवक्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥

अहो कीदृशः समास्वादोऽत्र भवति उत्प्रेक्षायामिति सचेतस एव जानीयुः । अन्यानि च अलंकरणान्यपि विस्फुरन्ति विभिन्नेषु प्रदेशेषु, विस्तारभयान्नोपन्यस्यन्ते । सैषा स्थलीत्यत्र किमपि विवक्षामि—वाच्यस्तु पुरस्तादाभासत एव, किन्तु मन्त्रमिमं कथयन्ति, रहस्यमत्र निदधते तदियं श्रूयताम्—सैषा स्थली एषा समाधौ साक्षात्भूता कुण्डलिनीरूपा स्थली अकृत्रिमा भूमिराद्यशक्तेः प्रत्यक्षानुसन्धानाश्रयो वास्तविकः साधकानाम् । यत्र कुण्डलिन्यां विचिन्वता प्रणिदधता त्वाम् महाशक्ति-

मुर्व्यां महाविभूतिशालिन्यां तस्यां भ्रष्टं स्थितं यद्वा त्वाभ्रष्टमिति पद-भंगः। गोप्यतायै बिन्दुः क्षिप्तः, यथा—

काले बर्हिणीनिर्ह्रादे घनपीनपयोधरे।
कान्तः सर्वगुणोपेतो बाले दुःखेन लभ्यते ॥

पद्यमिदं केनचन प्रोषितप्रेयसा प्रेयसीं प्रीति प्रहितम्। वाचनसमये कश्चनाप्तः तस्या उपस्थितः। तदा यथा गुप्तये तया कवयित्र्या (ले) इत्यत्र बिन्दुं विन्यस्य "बालेन्दुःखे न लभ्यते" इति विपरिणमयितं तथा महाकविनापि 'त्वां' इति सम्पादितम्। तथा च अभ्रष्टं सर्वदा सन्निहित-मेकं सर्वबीजेषु मुख्यतमं नूपुरं नूपुराकारं चिन्तामणिसंज्ञे निवार्णमन्त्रस्य द्वितीयं बीजमदृश्यत। परावाङ्मूलचक्रस्थेत्युक्तेः परया वाण्या गुञ्जितम् अनुसंहितम्। तच्च त्वच्चरणारविन्दविश्लेषदुःखाद् बद्धमौनमिव, अर्थात् यावद् त्वच्चरणारविन्दस्य विश्लेषः भजनेऽभावस्तावत् तज्जन्येन दुःखेनेव मौनमिव भवति। प्रकृत्या गुञ्जदपि न श्रूयते समाहितेनापि, भजन-जनितेऽनुग्रहे तु सम्पद्यमाने तादृशोऽनुभवो भवतीति चिन्तामणेः कुण्डलिन्यां महाशक्तिं ध्यायता तद्भक्तिभाजा तदद्भुतप्रसादलब्धये अनुसंधानमार्गः कश्चिदागूरितः। मया इति पदस्यायमभिप्रायो यद् मा महाशक्तिः, तृतीया अभेदार्था। वाच्यवाचकयोरभेद आगमानाम्। तथा च महाशक्त्याभेदापन्नं तद्बीजमनुसन्धेयमिति।

एतदवशिष्यते वक्तुमेकं यत् रघुवंशमहाकाव्यमस्य अन्तिमा निर्मितिः लोकोत्तरा रसपरिपाकशालिनी। अत्र शतशः सहस्रशो विस्मयकारीणि वैचित्र्याणि गुरुभ्य एव गम्यानि। चमत्काराः प्रतिपद्यं प्रतिपदमत्र समुल्लसन्ति। यथा गीता महाभारतस्य कापि कृतिः सर्वस्व-भूता तथा महाकवेरियम्। अत्र निखिला शक्तिः सकला प्रतिभा कवि-कुलगुरुणा प्रकटिता। तत्रापि चतुर्दशे सर्गेऽमुष्य महीयसी महार्हा च ममता कापि जागर्त्ति। अत्र हि करुणो रसो जानकीत्यागजन्मा अन्तरंगं कुम्भमिव सलिलेन प्रपूर्य कवितारूपेण परिणममानः सर्वतः सम्प्लाव-यन्निव अनुभूयते। तत्र सहृदयान् विशेषतोऽवधापयन् अभिव्यनक्ति—

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः॥

स्पष्टो वाच्योऽर्थः, व्यंग्यस्तु--कविः सहृदयान् संबोध्य निर्बन्धाति यतो भवन्तो विशेषतो मम पक्षपातिनः तत् तस्माद् एव चतुर्दशः सर्गः करुणार्द्रचित्तैर्दयातिशयशालिभिर्भवद्भिः सचेतोभिः न प्रतिषेधनीयः, नैव त्याज्यः। यदि निर्मुक्तापयसः कण्टकं जीवनं मदीयं भवन्तोऽभ्यर्थयन्ते। अत्रापि सहृदयैरिदं न विस्मरणीयं यदिदं भवतामनुरञ्जनार्थमेव सर्वमेतत्। वस्तुतो भगवतो महाशक्त्या कदापि क्षणमपि स्वप्नेऽपि न भवति विप्रयोगः। विप्रयोगे तुषारमैश्वर्यमेव स्यात्। नित्यं त्रैकालिकः शक्तीश्वरयोः सम्बन्धः। लीलादृशा जानकी-विरहो वर्णितः। यथा युक्तं स्वेनैव—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

अत्र "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति जैमिनिप्रतिपादितदिशा शब्दार्थयोरिव शक्तीश्वरयोर्नित्यसम्बन्ध उद्घोषितः। सीतारामौ, लक्ष्मीनारायणौ, पार्वतीपरमेश्वरौ चाभिन्नावेवेति महतां सिद्धान्तः। वागर्थोपमया शक्तीश्वरयोर्नित्यसम्बद्धतामभिदधता कवि-कुलगुरुणा निरतिसयप्रेमशालितां तयोरभिव्यञ्जता स्वस्यापि तादृश-मंगलाचरणेन शृङ्गारसराजनिर्भरत्वं प्रबन्धानां च स्वीयानां तादृश्यं विभावितमेव।

एवं च महाकवेरस्य कविकुलमौलिमालालालितचरणयुगलस्य विश्ववन्दनीयस्य निभाल्यन्ते यावन्तो गुणाः, तदीयेषु च सन्दर्भेषु यत्र यत्र अवधीयते मनस्तत्र-तत्र समन्ततो लोकोत्तरं लावण्यम्, चञ्चूर्य-मार्णश्चमत्कारः, अद्भुता प्रतिभा, विश्वातिशायिनी कविता, लालित्या-लिङ्गिताः कला विलाभयन्ति, आवर्जयन्ति, मुखरयन्ति, वशंवदयन्ति, स्नावयन्ति, अमृते निमज्जयन्ति, लोकोत्तरं रसास्वादं वितरन्ति।

## ३२. श्रीहर्षः

अयं महाराजः श्रीहर्षः हर्षवर्धनेति नाम्नो भारतीयेतिहासे नितरां प्रख्यात इति तु विदितमेव। अस्य पितुर्नाम प्रभाकरवर्धन इति, मातुश्च यशोमतीदेवीति। ज्येष्ठो भ्राता राज्यवर्धननामा ६६१ विक्रमाब्दे पितर्युपरते राज्यपदाधिकारमलभत। तस्मिन्नेव समये स्वसुः राज्यश्रीत्याख्यायाः पतिः ग्रहवर्मा मालवनरपतिना यशःशेषतां नीतः। राज्यवर्धनस्तु मालवनरेशमाक्रम्य तं स्ववशमनैषीत् परन्तु कथमपि कपटेन गौडमहीशेन शशांकेन संग्रामे हतो वीरगतिं प्रपेदे। तदनन्तरं हर्षवर्धनः ६७३ विक्रमीये राज्यसिंहासनमधिरुह्य सकलमुत्तरं भारतवर्षं नयेन प्रशासन् भूमिं राजन्वतीं चकार।

स्वराज्यारोहणवर्षादारभ्य स निजाभिधानानुसारिणं 'हर्षसंवत्' इति नाम्ना प्रथितं नवीनमेकं संवत्सरं स्थापयामास। भुवनानां विजयाय सोऽतिमहतीं सेनां स्ववशीचकार। तेन महता बलौघेनोपबृंहितप्रभावो नरपतिरेष वर्षपञ्चकाभ्यन्तरमेव भारतवर्षस्य समग्रमुत्तरीयं विभागं सर्वथा विजित्य सर्वान् तत्तत्प्रदेशाधिपान् निजसामन्तमण्डलोपरिभुक्तान् चकार। महाराजाधिराजेति समुन्नतां पदवीमपि तदनन्तरमलञ्चकार। प्रकृतिषु रूढमूलोऽसौ वसुधाधिपो वर्षाणां पञ्चत्रिंशद् यावत् सर्वत्र नयेन प्रजाः पालयन्, तासां रक्षायै सर्वं कार्यजातं कुर्वन्, परमेण सौख्येन राज्यसिंहासनं मण्डयामास। उत्तरभारतमवजित्य दक्षिणदेशमपि विजिगीषुर्महता बलेन प्रातिष्ठत, परन्तु चालुक्यवंशस्यालङ्कारभूतेन महाराजद्वितीयपुलकेशिना निरुद्धमार्गो यथाकथञ्चित् निजां राजधानीमाजगाम। बहुषु दिनेषु गच्छत्सु वलभीनरेशो द्वितीयो धरसेनः श्रीहर्षेण पराक्रमिणाऽऽक्रान्तः सन् सर्वथा विजितो भूत्वा तद्गुणस्तुतिवन्दितामनीयत। एवं सर्वत्र वशीकृतसामान्तमण्डलीकः श्रीहर्षो हिमालयादारभ्य नर्मदां यावत्, प्राग्ज्योतिषपुरात् (अधुनाआसामेति नाम्ना प्रख्याताद् देशविशेषात्) आरभ्य

सौराष्ट्रं यावत् समस्तभूमण्डलं प्रकृती रञ्जयन् श्रीहर्षेति यथार्थनामा नरपतिः सर्माधिकेन हर्षेण दिनान्ययापयत्। हर्षे शासति महीं सर्वत्र जगतां कल्याणमुदियाय, सर्वत्र शान्तेः साम्राज्यं प्रावर्तते, गृहे गृहे प्रजाः सौख्यमन्वभूवन्, किं बहुना, महीपतिशिरोमणेः श्रीविक्रमादित्यस्य शासनानुकूलमेव तद्राज्येऽपि समुद्भवन् सौख्यतरङ्गितानि।

हर्षचरिते बाणभट्टोऽपि तच्चरितमेव वर्णयति—"[1]सोऽयं सुजन्मा सुगृहीतनामा, तेजसां राशिः, चतुरुदधिकेदारकुटुम्बी, भोक्ता ब्रह्मस्तम्बफलस्य, सकलादिराजचरितजयज्येष्ठमल्लो देवः परमेश्वरो हर्षः। एतेन च खलु राजन्वन्ती पृथ्वी। × × × चित्रमिदमत्यमरं राजत्वम्। अपि चास्य त्यागस्यार्थिनः, प्रज्ञायाः शास्त्राणि, कवित्वस्य वाचः, सत्त्वस्य साहसस्थानानि, उत्साहस्य व्यापाराः, कीर्तेर्दिङ्मुखानि, अनुरागस्य लोकहृदयानि, गुणगणस्य संख्या, कौशलस्य कला, न पर्याप्तो विषयः। अस्मिंश्च राजनि यतीनां योगपट्टकाः, पुण्यकर्मणां पार्थिवविग्रहाः, षट्पदानां दानग्रहणकलहाः, वृत्तानां पादच्छेदाः, अष्टापदानां चतुरङ्गकल्पना, पन्नगानां द्विजगुरुद्वेषाः, वाक्यविदामधिकरणविचाराः" इति।

श्रीहर्षस्य विजयवर्णनमपि साधु उपन्यस्तं बाणभट्टेनेति दृश्यतामस्य प्रबलः पराक्रमः —"[2]अस्य बहून्याश्चर्याणि श्रूयन्ते। तथाहि—अत्र बलजिता निश्चलीकृताश्चलन्तकृतपक्षाः क्षितिभृतः। अत्र प्रजापतिना शेषभोगिमण्डलस्योपरि क्षमा कृता। अत्रपुरुषोत्तमेन सिन्धुराजं प्रमथ्य लक्ष्मीरात्मीकृता। अत्र बलिना मोचितभूभृद्वेष्टनो मुक्तो महानागः। अत्र देवेनाभिषिक्तः कुमारः। अत्र स्वामिनैकप्रहारपातितारातिना प्रख्यापिता शक्तिः। अत्र नरसिंहेन स्वहस्तविशंसितारातिना प्रकटीकृतो विक्रमः। अत्र परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः। अत्र लोकपालेन दिशां मुखेषु परिकल्पिता लोकपालाः सकलभुवनकोशश्च अग्रजन्मनां विभक्त" इति।

---

१. हर्षचरितस्य द्वितीयोच्छ्वासे, पृ० ७७, ७८ ( निर्णयसागर )।

२. हर्षचरितस्य तृतीयोच्छ्वासे, पृ० ९०, ९१ ( निर्णयसागर )

श्रीहर्षस्य राज्यकाल एव 'हुएनत्सांग'नामा चीनदेशीयः परिव्राजको भगवता बुद्धदेवेन प्रचारितस्य स्वधर्मस्य सम्यगध्ययनाय भारतमहीमिमाजगाम। नालन्दविद्यालये बुद्धतत्त्वदर्शनानां कृत्वा प्रशस्तमध्ययनं बहुकालं यावत् श्रीहर्षस्याभिजनभूयिष्ठां परिषदं स्वावस्थानेन मण्डयामास। 'हुएनत्सांगः' तत्कालिकीं प्रकृतीनां समृद्धिं राज्ञश्च प्रजाजनवत्सलतां स्वयात्राविवरणग्रन्थे समधिकं प्रशंसति। श्रीहर्षश्चासीदतीव वदान्य इति व्यक्तमेव हुएनत्सांगकृतात् तद्वर्णनात्। गंगायमुनयोः सङ्गमस्थले पवित्रे श्रीतीर्थराजे प्रयागे स पञ्चवर्षानन्तरं महान्तं दानयज्ञमचीकरत्, यत्र समस्तमपि संगृहीतमर्थजातं ब्राह्मणेभ्यः श्रमणेभ्यो दरिद्रेभ्यश्च वितीर्य नरपतिरसौ स्वां विभूतिं मृत्पात्रशेषामकार्षीत्। स भगवतस्त्रिलोचनस्य जगन्नायकस्य श्रीसूर्यस्य च भक्तो बभूव, परन्तु श्रूयते हुएनत्सांगसमागमक्रमेण स तथागतधर्मेऽपि महतीं श्रद्धां विदधे। श्रीनागानन्दे भगवतो बुद्धस्य मारविजयं प्रख्यापयन्ती नान्दी सिद्धान्तमिमं द्रढयतीति सुव्यक्तमेव विदुषाम्। बौद्धधर्मे जातश्रद्धेनापि श्रीहर्षेण वैदिकधर्मे स्वास्था कथमपि न शिथिलीकृतेति तद्ग्रन्थावलोकनशीलानां नापरोक्षमेवेति मन्यामहे।

## कालनिर्णयः

पूर्वोक्तेन वर्णनक्रमेण तस्याविर्भावकालः सत्यतया निर्णेतुं शक्यते। उक्तमेवास्माभिर्यत् ६६३ वैक्रमाब्दे (६०६ ई०) स राज्यसिंहासनं स्वावरोहणविधिना मण्डयामासेति। सं० ७०४ वैक्रमाब्दे (६४७ ख्रिस्ताब्दे) जगति स्वयशःकायं निधाय पञ्चत्वं जगाम। एकचत्वारिंशद् वर्षाणि यावत् श्रीहर्षो भारतेऽस्मिन् वर्षे राज्यपदमलञ्चकारेति स्फुटमेव। इत्थं श्रीविक्रमस्य सप्तमशताब्द्या उत्तरार्द्धमेव तस्य समय इति निश्चितमेवेति।

## सभापण्डिताः

स केवलं वीरलक्ष्म्याः पर्युपासको नाभूत्, यावल्ललितकलास्वपि परामनुरक्तिमुदवहत्। गुणगौरवशालिनोऽनेकेऽपि विद्वांसस्तस्य सभां

मण्डयामासुः। आसीत् तस्य परिषद् अभिरूपजनभूयिष्ठेति नाविदित-मिदमितिहासज्ञानां विद्वद्वरेण्यानाम्। अभूत् श्रीबाणभट्टो हर्षसभायाः किमप्यनुपमं रत्नम्, यो नरपतेर्विख्यातविक्रमार्जितां यशःपद्धतिं ललित-विन्यासवता गद्येन हर्षचरिताख्ये गद्यकाव्ये चारु वर्णयामास। तेन जगद्विख्यातवैदुषीविभवेन निखिलानां रसिकजनानां हृदयहारिणी कादम्बरीति सर्वत्र विख्याताऽतद्द्वयी कथा गीर्वाणवाण्यां निबद्धा। श्रीभगवत्याः स्तोत्रपरम्परारूपं चण्डीशतकमपि काव्यं श्रीबाणभट्टेन व्यलेखीति प्रसिद्धमेव।

मयूरभट्टः श्रीहर्षनरपतेः सभायां द्वितीयं कविरत्नम्। श्रूयते खलु यत् कुष्ठरोगेण दुर्निवारेण दैवदुर्विपाकात् समाक्रान्तोऽयं महाकविर्भगवन्तं सवितारं स्तोतुकामः शब्दविन्यासशालिनं कमपि मनोरमार्थसंवलितं नातिविस्तरं 'श्रीसूर्यशतक'नामानं काव्यग्रन्थमेकं स्रग्धरावृत्तेन रचयामास। 'आदित्यादेर्मयूरादीनामिवानर्थनिवारणम्' इति वदता काव्य-प्रकाशे मम्मटाचार्येण मयूरभट्टस्य काव्यकरणचातुरी व्यञ्जनया प्रशंसितेति सुधीभिर्बोद्धव्यम्। कविरयं बाणभट्टस्य श्वसुर आसीदिति विद्यते कापि विबुधसमाजे किंवदन्ती।

दिवाकरोऽपि श्रीहर्षसभायां सभ्यो बभूवेति प्रसिद्धमेव। श्रूयते स कस्मिंश्चिद् निम्नवर्णे कुले जनिमलभत, परन्तु केवलं स्वगुणानां माहा-त्म्येनोच्चवर्णाभिजाताभ्यां बाणमयूरभट्टाभ्यां साकं राज्ञः सम्माननीयां सभ्यपदवीमलञ्चकारेति सत्यमेवाह वाग्देव्याः प्रभावं श्रीराजशेखरः—

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः॥

बाणमयूरयोः श्रीहर्षसभायां समुपस्थितिर्दशमशतकाविर्भूतेन महा-कविना पद्मगुप्तेन स्वनवसाहसांकचरिताभिधे महाकाव्ये स्फुटमेव प्रमाणीकृता—

सचित्रवर्णविच्छित्तिहारिणोरवनीपतिः।
श्रीहर्ष इव संघट्टं चक्रे बाणमयूरयोः॥

अन्येऽपि कवयः पण्डिताश्च तत्सभामलमकुर्वन्निति सम्भाव्यते। श्रीहर्षः सर्वानेतान् पण्डितान् द्रव्यवितरणेन भूमिदानेन च सर्वथा स्वविभवानुरूपं सममानयदिति तस्य शिलासूट्टङ्कितैर्बहुभिर्लेखैः सुव्यक्तमेव इतिहासविद्याजुषां विदुषाम्।

## श्रीहर्षस्य ग्रन्थकर्तृत्वम्

नाभून् श्रीहर्षः केवलं कवीनां परमं परायणम्, न च विदुषां केवलं समाश्रयः, यावत् स स्वयमेव ललितललितान् ग्रन्थान् प्रणीय श्रीमत्याः सरस्वत्या विपुलां सपर्यामात्मनाऽपि विदधे। "निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च" इति कविशिरोमणेः कालिदासस्योक्तिं नितान्तमानुरूप्यं भजन्ती श्रीहर्षमनुबध्नातीति निपुणं प्रदर्शयितुं पारयामः।

बभूवुरस्माकं भारतेवर्षे विक्रमादित्यशूद्रकहालप्रभृतयो राजानः परमविद्योपासका महाकवयः। तेष्वेवायमन्यतमो रत्नावलीकर्ता श्रीहर्षः। पीयूषवर्षो जयदेवः स्वप्रसन्नराघवे रूपके कविताकामिनीं वर्णयन् श्रीहर्षं तस्या हर्षत्वेनावर्णयत् 'हर्षो हर्षः' इत्यादिना। हृदयवसतिशीलेन कामिन्याः पञ्चबाणभूतेन बाणभट्टेन साकं तस्य नामोल्लेखं चापि व्यदधात्। विक्रमस्यैकादशशतकसमुद्भूतेन सोड्ढलेन उदयसुन्दर्यां श्रीहर्षो वाग्देवीहर्षप्रदायित्वेन गीर्हर्षेत्यन्वर्थनाम्ना निपुणं प्रशंशितः। यथा—

> श्रीहर्ष इत्यवनिवर्तिषु पार्थिवेषु
> नाम्नैव केवलमजायत वस्तुतस्तु।
> श्रीहर्ष एष निजसंसदि येन राज्ञा
> सम्पूजितः कनककोटिशतेन बाणः॥

एवमेव दामोदरगुप्त कुट्टनीमते रत्नावल्या नाम्ना निर्देशमकार्षीत्। तां च राजकृतां विनिर्दिशन् तस्या महाराजश्रीहर्षकर्तृत्वं ख्यापयंश्च तस्य महतीं काव्यचातुरीं व्यक्तं प्रकटयतितराम्। नाविदितमितिहासज्ञानां यत् 'इत्सिंग' नामा चीनदेशाभिजनो बौद्धपरिव्राजकः स्वधर्म-

ग्रन्थानध्येतुकामः श्रीहर्षस्य मृत्योः समनन्तरमेव भारतवर्षमाजगाम। स निजयात्राविवरणात्मके ग्रन्थे स्पष्टमेव श्रीहर्षस्य नागानन्द-रचयितृत्वमुल्लिखति। स कथयति—"राज्ञा शीलादित्येन (श्रीहर्षेण) बोधिसत्त्वजीमूतवाहनस्याऽऽख्यायिका नाटकरूपेण परिणमिता, सङ्गीतादिसमुपचितसामग्रीसंवलिता नटैश्चाभिनयं प्रापिता" इति। व्यक्तमेतेन महाराजश्रीहर्षस्य ग्रन्थकर्तृत्वम्। एतेषु प्रमाणेषु विद्यमानेष्वपि ये तत्कर्तृत्वविषये सन्दिहानाः, ते बाणभट्टस्य कथनमिदं विचार्य स्वं संशयं निराकुर्वन्तु। हर्षचरिते बाणभट्टो वारद्वयं राज्ञः काव्यव्याकरणचातुरीं प्रशंसति। "राज्ञां सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तम्, काव्यकथास्वपीतामृतमुद्वमन्तम्" इति कथनं श्रीहर्षस्य काममपि प्रकटयति काव्यवैदुषीम्। "अस्य कवित्वस्य वाचो न पर्याप्तो विषयः" इति वर्णयन् बाणभट्टो महाराजस्य काव्यविरचनपाटवं स्फुटमेव व्यनक्ति। इत्थं श्रीहर्षस्य काव्यरचनायां नागानन्दस्य च निबन्धने न भविष्यति कस्यापि कोऽपि सन्देह इति निपुणं प्रतीमः।

साम्प्रतं धावककवे रत्नावल्यादिकर्तृत्वं निरस्यते। काव्यप्रयोजनवर्णनप्रस्तावे श्रीमम्मटाचार्योऽर्थकृते काव्यं व्यपदिशन् "श्रीहर्षादेर्धावकादीनामिव धनम्" इति दृष्टान्तमुखेन समुल्लिखति। तत्र केऽपि नवीनाः काव्यप्रकाशटीकाकाराः—"धावको रत्नावलीं विरच्य श्रीहर्षाद् महद्धनं लब्धवान्" इति प्रतिपादयन्ति[1], परन्तु तेषां कथनमेतत् पूर्वोक्तेषु सत्सु प्रबलेषु प्रमाणेषु नास्माकमवतरति श्रद्धापदवीम्। केषुचित् काव्यप्रकाशपुस्तकेषु श्रीहर्षादेर्बाणादीनामिव धनमिति विभिन्नं पाठमुपलभ्य ये खलु साहसिकाः पाश्चात्त्यविवेचकाः श्रीहर्षस्य कर्तृत्वं प्रतिषिध्य बाणभट्टे रत्नावल्यादिरचयितृत्वं समारोपयन्ति, तेषां कथनं तु तथैवाश्रद्धेयमिति। मम्मटाचार्यकृतः समुल्लेखस्तु केवलं श्रीहर्षस्य कविषु दातृत्वनिबन्धनः। तथा च प्रचुरं स्मर्यते तस्य दानशीलता कवित्वरे बाणभट्टे—

---

१ धावकस्तन्नामा कविः। स हि श्रीहर्षनृपनाम्ना रत्नावलीनाम्नीं नाटिकां कृत्वा बहुधनं लब्धवानिति प्रसिद्धिरिति नागेशविरचिते उद्योते स्पष्टमुपलक्ष्यते।

"यावदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्। स्वल्पैरेव चाहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विस्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमनीयत नरेन्द्रेण।" (हर्षचरिते)।

श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलम्।

(सुभाषितावल्याम्)

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम्॥

(सारसमूच्चये)

## श्रीहर्षकृता ग्रन्थाः

सन्ति प्रणीतास्त्रयो ग्रन्थाः महाराजश्रीहर्षेण। आप्नुवानाः सर्वत्र संस्कृतसाहित्ये परमां प्रख्यातिं रञ्जयन्तो विदग्धानां चेतांसि ग्रन्था अमी कस्य संस्कृतविद्याजुषो विदुषो नाद्यापि समुपेताः श्रवणपदवीम्। तथापि समुल्लिख्यन्ते ते साम्प्रतं नाम्ना विद्यार्थिजनसौकर्याय। ते च यथा—(१) प्रियदर्शिका (नाटिका), (२) रत्नावली (नाटिका), (३) नागानन्दम् (विदुषां करकमलमुपेतं प्रख्यातं नाटकम्)। यावत् सर्वेऽप्येते ग्रन्था एकेनैव कविना निबद्धा इति तत्तद्ग्रन्थाध्येतॄणां पठनेनामुना केवलेन झटिति स्फुटीभविष्यति सिद्धान्तः। उपरि विलिखितेषु त्रिष्वपि दृश्यते शब्दानां समानो विन्यासः, गोचरीक्रियते ह्यर्थानां सर्वथा समता, समुपलभ्यते च रचनायाः कोऽपि सदृशः प्रकारः। किं बहुना, लक्ष्यन्ते च सर्वेष्वपि समुद्धृतानि तान्येव कानिचित् पद्यानि। येन स्फुटमेवामीष सिध्यति एककविकर्तृत्वम्। ये च केऽपि शंकाकुलितचित्ता न पारयन्ति सिद्धान्तमिमं स्वीकर्तुम्, ते खलु स्वयमेवावलोकयन्तु नागानन्दस्य प्रियदर्शिकारत्नावलीभ्यां सकां

शब्दसादृश्यं भावसाम्यं च, विचारयन्तु चात्मना तदुद्गतं सिद्धान्तम्।

तत्र प्रियदर्शिका-रत्नावल्योरुभयोरपि कविना निबद्धमेकमेव वत्सराजस्योदयनस्य नितान्तं कौतुकावहं बृहत्कथामूलं चरित्रम्। अनयो रत्नावली तु वस्तुविन्यासकौशलेन सुभगभावप्रदर्शनपाटवेन च प्रियदर्शिकां निपुणमतिशेते; संस्कृतसाहित्ये प्रख्यातिं च भजते। दामोदरगुप्तेन कुट्टिनीमते रत्नावल्या एव पञ्चसन्ध्यादिविभागः सुचारुतया प्रदर्शित इति व्यक्तं जागर्ति रत्नावल्या लोकप्रियता, परन्तु हर्षचरित-ग्रन्थेषु नागानन्दस्यैव जागर्ति किमपि वैशिष्ट्यमिति तस्यैवालोचनायां प्रस्तुता वयम्।

## नागानन्दस्य समीक्षा

नागानन्दमिदं रत्नावल्या अनन्तरं समधिकरमणीयतया सर्वेषां सहृदयानां चेतांसि रञ्जयति। काव्यप्रकाशे मम्मटः, लोचने श्री-अभिनवगुप्तपादाचार्याः, ध्वन्यालोके च श्रीमदानन्दवर्धनपादा रस-विरोधपरिहारवर्णनावसरे नागानन्दं समुल्लिखन्ति, नाम्ना विचारयन्ति चात्रत्यं शान्तशृङ्गारयोः समुपलभ्यमानं विरोधम्। अनेन अलङ्कारशास्त्र-प्रवीणेषु ग्रन्थस्यास्यासीत् प्रसिद्धिरिति स्फुटं प्रतीयते। रसानुकूल एव वर्णानां विन्यासो निबद्धो दृश्यते। व्यनक्ति शृङ्गाररसवर्णने मधुराणां प्रयोगो वर्णानाम्, विकटवस्तुवर्णनक्रमे तु उद्धतानां व्यक्तमेव कवेः किमपि काव्यपाटवम्। चमत्करोति अर्थेषु चमत्कारः सर्वरसिकजनानां चेतांसि। रसनिवेशश्चापि सर्वथा श्लाघनीय एवेति सरसमिदं पद्यं पठित्वा कस्य अश्ममयहृदयस्यापि मानसं करुणरसाप्लावितं न स्यात्?

निराधारं धैर्यं कमिव शरणं यातु विनयः<br>
क्षमः क्षान्तिं वोढुं इह? विरता दानपरता।<br>
हतं सत्यं सत्यं व्रजतु कृपणा क्वाद्य करुणा<br>
जगज्जातं शून्यं त्वयि तनय! लोकान्तरगते॥

पद्यस्यास्य सकृत्पठनेन कः सहृदयो मालतीमाधवे भवभूते-रेतच्छायानुसारि पद्यरत्नमिदं न स्मरति?

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः॥

एवं सर्वत्र श्रीहर्षेण काव्यप्रणयने काऽपि सरसा रीतिः स्वीकृता, नाटकनिबन्धने च किमपि महत् कौशलमङ्गीकृतमिति व्यक्तं वक्तुं शक्नुमः। प्रथमांके तपोवनस्य शान्तरससमर्पकं विशदं वर्णनं पठित्वा कस्य नैव नरीनृत्यते मानसमानन्देन। द्वितीयेऽङ्के मलयवतीजीमूतवाहनयोः सरसं विवाहमवलोकयतः कस्य नैव जायते ललितरसाक्रान्तं चेतः? तृतीयेऽङ्के शेखरकेण चेटीबुद्ध्या पादपतनेन प्रसाद्यमानं रक्तवस्त्रावगुण्ठितविग्रहं विदूषकं पश्यतः कस्य प्रफुल्लतां नोपयात्याननं हास्यरसे सहृदयस्य? चतुर्थेऽङ्के पुत्रवधशंकया भृशमाक्रोशन्त्याः शङ्खचूडजनन्याः परिदेवितमाकर्ण्य न जायते कस्यान्तःकरणं सान्द्रं समाप्लुतं करुणरसेन। एवं पञ्चमेऽङ्के जीमूतकेतोः, मलयवत्याः, वृद्धायाश्च सम्भावितानिष्टशंकया करुणां दशां निरीक्ष्य कस्य हृदि नैव दधाति पदं शोकः? किं बहुना, मलयशिखरे भक्षणाद् विरतं गरुडं पुनरपि स्वशरीरमांसभोजनाय प्रार्थयन्तं जीमूतवाहनमवलोकयन् को नु जगति एवं भविष्यति यस्य मनसि नोत्पादयिष्यति परोपकारव्रतस्य महिमा नायकस्य चोदारचरित्रं च प्रसभं प्रभावम्?

एनमेव धारयति पात्राणां चित्रणे चरित्रस्य किमपि प्रकृष्टं पाटवं श्रीहर्षः। आत्रेयस्य सदैव हास्याभिरुचिः, जीमूतकेतोः पुत्रवात्सल्यम् वृद्धायाः शंखचूडजनन्या निष्कपटः सुतस्नेहः, मलयवत्या अकृत्रिमोऽनुरागः सर्वमेव कविना आप्रारम्भादवसानं यावत् सदृशाभिनिवेशपुरःसरं कौशलेन प्रदर्शितमिति सद्यः स्फुटीभवति नाटकाध्ययने पाठकानाम्। परन्तु सर्वथैवादर्शरूपतां भजते श्रीहर्षेण वर्णितो नायको जीमूतवाहनः। समृद्धमपि कुलक्रमागतं राज्यं परित्यज्य, पितृचरणपरिचर्यायै वनं गच्छन् सन्, पुत्राणां शिरोमणिरेव आर्तजनप्राणरक्षार्थै स्वजीवितं परित्यजन् दयावीराणामप्यादर्शः इति जीमूतवाहनस्य पवित्रं चरित्रं श्रीहर्षोपवर्तते

पनिबद्धमवलोकयतः परोपकारमहाव्रतस्याऽहिंसाधर्मस्य च महत्ता प्रभूतैः समुदारैर्भावैर्नैव विधत्ते कस्योन्नतं चेतः पुरुषस्य ?

## नागानन्दे सुभाषितानि

समुपलभ्यन्तेऽस्मिन् नागानन्दे स्वभासा प्रकाशमानानि बहूनि सुभाषितरत्नानि, यानि खलु गुणज्ञानां मनांसि प्रसभं प्रलोभयन्ति। तेषां कतिपयान्येवात्रोपन्यस्यन्ते दिदृक्षूणां नेत्ररञ्जनाय—

१. रत्नाकराद्दते कुतश्चन्द्रलेखायाः प्रसूतिः ।
२. कीदृशो नवमालिकया विना शेखरकः ।
३. वन्द्या खलु देवताः ।
४. निर्दोषदर्शना हि कन्यकाः ।
५. जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया । ( ३।४ )
६. स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ( ३।६ )
७. मधुमथनो वक्षःस्थलेन लक्ष्मीमनुद्वहन् निर्वृत्तो भवति ।
८. आयासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद् गुणः ।
९. समागमो भवति पुण्यवताम् ।। ( २।१४ )
१०. स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशंक्यते स्नेहात् । ( ५।१ )
११. एकः श्लाघ्यो विवस्वान् परहितकरणाय वै यस्य प्रयासः ।
१२. शरीरनाम्नि का शोभा सदा बीभत्सदर्शने । ( ५।२३ )
१३. भूयात् परोपकाराय शरीरलाभः । ( ४.२६ )
१४. शरीरकस्यापि कृते मूढाः पापानि कुर्वते । ( ४।७ )

इत्थमेव चान्यान्यपि विद्यन्ते मनोहराणि सरसानि पद्यानि।

## नागानन्दस्य वैशिष्टयम्

विद्यते का नु खलु विशिष्टिता नागानन्दस्य संस्कृतनाटकसाहित्ये ? इति विषयं साम्प्रतं विचारयामः। प्रायशः स्वार्थप्राया एव विलसन्ति प्राणिनां वृत्तय इति हेतोर्लोकचरितमनुरुध्य विरचितेषु रूपकेषु स्वार्थमयानामेव वर्तते प्राधान्यं लोकवृत्तानाम्। अस्मिन् नागानन्दे तु विहायेमां प्रचलितां रीतिं रूपकाणाम्, अन्यदेवाऽहिंसामूलकं परोपकारविबन्धनं

लोकानां परममङ्गलाय वृत्तमुपनिबद्धं कविना श्रीहर्षेण। नायको जीमूतवाहनो परित्यज्य समृद्धमपि राज्यं पित्रोश्चरणपरिचर्यानिरतः सर्वेषां पुरतऽपुत्रस्याऽऽदर्शरूपतां प्रकटयति। तदनन्तरं विहाय तावपि पितरौ, अवमत्य च नवपरिणीतां सौन्दर्यसम्पन्नां स्वीयां कान्तां नागस्यैकस्य जीवितरक्षणाय प्रियानपि निजान् प्राणान् गरुत्मते दातुकामः प्रथयति प्रकर्षं परोपकारव्रतस्य, विकाशयति परां कोटिमहिंसाव्रतस्य, उपदिशति च निजेन चरिते सर्वान् जनान् विमलां व्यवहाररूपताम् 'अहिंसा परमो धर्मः' इति सिद्धान्तवचनस्य। प्रायो नाटकेषु शृङ्गारस्येव विलसति कमनीया वर्णनरीतिरङ्गीकृता कविभिः; परन्तु नागानन्दे दयावीररसस्य परमसुन्दर उपन्यस्तो वर्णनप्रकारः श्रीहर्षेण। अन्यश्चात्र विभाति विधिवैशिष्ट्यस्य। श्रीहर्षसमये तदानीन्तनभारतीयानां वैदिकधर्मोपरि आसीदेव काऽपि परमा श्रद्धा, परन्तु भगवता शौद्धोदनिना तथागतेन स्थापितस्य बौद्धधर्मस्यापि सार्वत्रिको बभूव प्रचार इति मन्यन्ते इतिहासवेत्तारः। नागानन्दे वैदिकबौद्धधर्मयोरनयोः परमसुन्दरः समन्वयक्रमोऽपि तथैव कविना वर्णितोऽस्माभिर्गोचरीक्रियते। जीमूतवाहनस्तु बोधिसत्त्व एव। तदीया कथापि विद्याधरजातकप्रतिबद्धा बौद्धधर्ममेवाऽऽश्रयत्वेन समनुबध्नाति, परन्तु वर्णयति श्रीहर्षः प्रथमाङ्के नायिकां मलयवतीं वैदिकधर्मदेवतां गौरीं वीणया प्रसादयन्ती तदीयान् प्रसादाँश्चाभिलष्यन्तीम्। एवमेव पञ्चमाङ्के भगवत्या गौर्या अमोघदर्शनायाः प्रार्थनासमकालमेवाविर्भूतायाः प्रसादेनालभत नायको निजां चेतनतां प्राप्तवांश्च समुन्नतां चक्रवर्तिपदवीमिति रूपयता महाकविना चारु प्रदर्शितो वैदिकबौद्धधर्मयोर्मनोरमः समन्वयक्रमः।



## ३३. काव्यप्रयोजनविमर्शः

विलसन्ति पाश्चात्त्यदेशेषु प्रतिदिनं साहित्यक्षेत्रेऽभिनवा वादाः। साहित्यस्य किं लक्ष्यम्, कश्च उद्देश इति विषये प्राचीनानां नव्यानां वा विदुषां नैकमत्यम्। साहित्यशब्दस्यायमर्थः—हितेन सह सहितम्, सहितस्य भावः साहित्यम्। अत एव यद् वस्तु हितेन कल्याणेन शिवेन युक्तमस्ति तदेव साहित्यम्। येन समाजस्य राष्ट्रस्य च हितं भवति तदेव साहित्यम्, नान्यथा। काव्यस्य प्रयोजनं नाना विद्यते। निष्प्रयोजनं काव्यं खपुष्पायतेऽस्मिन् जगति। भारतीया आलङ्कारिकाः समाजस्य कल्याणायैव काव्यस्य रचना करणीया इति सिद्धान्तः प्रतिपादयन्ति। काव्यस्य प्रयोजनं प्रतिपादयता समालोचकशिरोमणिना मम्मटाचार्येण स्पष्टमेवोद्घोषितम्—

> काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
> सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥

अयं भावः—यत् काव्यं यशोलाभाय, अर्थप्राप्तये, व्यवहारज्ञानाय, अमङ्गलानां नाशाय, परमानन्दस्योपलब्धये कान्ता-सम्मिततया उपदेश-दानाय कविभिः क्रियते। यत् काव्यं समाजे देशे वा अमङ्गलनाशाय न स्यात् तन्न काव्यं कव्यं भवितुमर्हति। काव्यमुपदेशं ददाति, परन्तु स उपदेशः शर्करासमन्वितगुलिकावद् मधुरया भाषया सरसेन वाक्येन सुमनोहरेण चार्थनिवेशेन भवति। अत एव भारतीयालङ्कारिकाणां मतेन काव्यस्य प्रथममुद्देश्यं कल्याणस्य मङ्गलस्य वा वर्धनम्, द्वितीयं मधुरेण शब्देनोपदेशश्चास्तः।

अत्र विवदन्ते वैदेशिकाः पण्डिताः। कतिपये पाश्चात्त्यसाहित्य-समालोचकाः कथयन्ति यत् साहित्यस्य न किमपि उद्देश्यम्, न वा किमपि विद्यते लक्ष्यम्। यथा निर्जने वने विकसितानां पुष्पाणां विकासस्य नो विद्यते उद्देश्यं किञ्चन। ते तु निजेन लोकोत्तरेण सौगन्ध्येन जनेभ्य

आनन्दं प्रदाय विलयं प्रयान्ति रमणीयस्य काव्यस्यापि न किमपि प्रयोजनं भवति। पाठकानां हृदये आनन्दप्रदानमेव तस्य सर्वश्रेष्ठं लक्ष्यम्। तेषां मतमिदम्—'कला कलायै एव भवति' (आर्ट फार आर्ट सेक) इति नाम्ना प्रसिद्धमस्ति, परन्तु मतमिदं न कथमपि समीचीनम्; यत् काव्यं जनानां लाभाय उपदेशाय वा न स्यात् तत्तु वाग्विजृम्भण-मात्रमेव।

संसारेऽस्मिन् काव्यस्यातीव प्रकृष्टः प्रभावो दृश्यते। यदा कदा श्लोकार्धेन यत् सुमहत् कार्यं सम्पादितं भवति, तत्तु न कदापि गुरूपदेशेन भवतुमर्हति। प्रसिद्धं यद् जयपुराधीशो राजा जयसिंहः स्वनवीनपरिणीतायां रमण्यां राजकार्यं परित्यज्य रममाण आसीत्। एकदा सुप्रसिद्धो भाषाकविः बिहारीलालः तस्य राजसभामगच्छत। स महाकविः पद्यमिदं लिखित्वा राजसमीपे प्रेषितवान्—

"नहि पराग नहिं मधुर मधु, नहि विकास एहि काल।
अली कली ही सो विंध्यौ, आगे कौन हवाल॥"

पद्यमिदं पठित्वा राजा अतीव प्रभावान्वितो बभूव। तदनन्तर-मन्तःपुरं परित्यज्य राज्यकार्यमेव चिन्तयामासः। गोस्वामिनस्तुलसी-दासस्य एकेन पद्यांशेन (चौपाई) अनेके जनाः परित्यज्य कुमार्गं भक्तिपथं समारूढा इति कः खलु न विदाङ्करोति? अत एव काव्यस्य निर्विवादं लक्ष्यं सभाजे मङ्गलस्य विधानं सदुपदेशश्चास्ति।

आधुनिकपाश्चात्त्य-साहित्ये एका नवीना विचार-सरणिः दृश्यते, यद् रहस्यवाद (मिस्टीसिजम) इति नाम्ना प्रसिद्धोऽस्ति। पश्चात्त्यक-विवराणामेको नूतनोऽधुना विद्यते सम्प्रदायः, यो रहस्यवादी (मिस्टिक) इति कथ्यते। कवीनामेषां कविता ईश्वरोन्मुखी भवति। हिन्दीसाहित्ये अपि एतादृशी कविता दृश्यतेऽधुना यदीश्वरोन्मुखीवर्तते। अयमेव 'छायावादः' इति नाम्ना प्रसिद्धोऽस्ति। रहस्यवादिकवितायाः शब्दा-वलिरपि विचित्रा भवति। अस्मिन् शब्दसमूहे लाक्षणिक-पदावलेः प्रयोगो भवति विशेषरूपेण।

अधुना एकोऽभिनवो वादो हिन्दीभाषायां दृश्यते, स तु 'प्रगतिवाद' इति। प्रगतिशीलाः कवयो लेखकाश्च इदं कथयन्ति यत् साहित्यस्य सृष्टिरेकेनापि विशेषेणाभिप्रायेण भवितुमर्हति। स अभिप्रायस्तु दरिद्राणां पीडितानां च मनुष्याणां दुःखस्य प्रकाशनं भवितुमर्हति। तेषां कृते या कविता पीडितानाञ्च मानवानामुपरि कृतान् अत्याचारान् न प्रकटीकरोति सा तु कवितैव नास्ति। इमे प्रगतिशीलाः कवयो लेखकाश्च राजनैतिकक्षेत्रे मार्क्समहोदयस्य सिद्धान्तमुररीकुर्वाणा दृश्यन्ते। तेषां कृते भोजनस्य समस्याया व्यवस्थापनमेव काव्यस्य चरममुद्देश्यम्।

भवतु नाम भोजनं मानवजीवनस्य परमावश्यकं वस्तु। तेन विना न किमपि कार्यं भवितुमर्हति। कस्तत्र विवादः? परन्तु संसारे न केवलं भोजनमेव सर्वस्वमस्ति। संसारे अन्येऽपि विषयाः सन्ति, येषां वर्णनं काव्ये श्रेयस्करं भवितुं योग्यम्। अत एव प्रगतिशीलाः कवयो लेखकाश्च अन्यविषयमालम्ब्य काव्यं कुर्युः तदा श्रेयस्करं भवेत्।

## ३४. श्रमणसंस्कृतौ सौन्दर्यविचारः

कलाशब्दव्यवहारो हि सर्वत्राद्यत्वे प्रवृत्तोऽस्ति। बहवोऽसुन्दरा विषया अपि 'कला'शब्देन योज्यन्ते समीक्षाशून्यैः। नहि कवितेव, कलाऽपि शब्दैर्निर्वक्तुं शक्या। किमपि वस्तु स्वभावतः सुन्दरमसुन्दरं वा न भवति, ग्रहीतृभेदाद् भावभेदाद् वायं व्यवहारो जायते। द्रष्टू रसानुभूत्यनुसारेणैव वस्तुनः सौन्दर्यं वैरूप्यं वा शक्यं निर्णेतुम्। श्रमणसंस्कृतिस्तावद् दार्शनिकसिद्धान्तानामन्यतममनेकान्तवादमाश्रित्य वस्तुनो विविधरूपाणामन्वीक्षणमुपदिशति। कलायाः सर्वे भेदाः प्रभेदाश्चास्मिन्नेवानेकान्तवादे समन्वयमासादयन्ति।

उपकरणाश्रितं सौन्दर्यं क्षयि, स्वात्मस्थं स्थाष्णु च भवति। अस्यां स्थितौ कलाशब्देन किं प्रतीयते? कस्यापि पारिभाषिकशब्दस्याभावेऽपि शक्यमेतद्वक्तुम्—अन्तरंगस्थानां पूर्णानाममूर्तानां च, भावानां बाह्योपादानसामग्रया मूर्तिमत्त्वापादनमेव कला नाम, मानवहृदयस्य सूक्ष्माया रसानुभूतेः संततिरेव कला वा; सत्यस्याभिव्यक्तिरेव कला वा। एतदपेक्षयापि व्यापकरूपेण प्रतिपादनीयमित्थम्—येन सौन्दर्यस्यानुभावनं प्रकाशश्च प्रतिपाद्यते तदेव वस्तु कला। याऽस्माकं कोमलां हृत्तन्त्रीं मुखरयेत् सा कला। एभिः शब्दैरिदं सिद्ध्यति यत् पार्थिवेषु (जडेषु) भावेष्वेव कलाया उत्पत्तिर्जायते। मूर्तेषु पुद्गलद्रव्येष्वेव कलाया उद्बोधः। कला हि सौन्दर्यमपेक्षते। 'आस्करवाइल्ड' महाशयः कथयति—येन सहास्माकं निष्प्रयोजनः सम्बन्धस्तदेव सुन्दरं नाम' इति।

सौन्दर्यं कला च परस्परं भिन्ने अपि परस्परानुग्राहिके स्तः, परन्तु सौन्दर्यस्यानन्देन विशिष्टः सम्बन्धो वर्तते। यद्यपि सौन्दर्यबोध इन्द्रियैरेव व्यज्यते, तथापि इन्द्रियग्राह्यं सौन्दर्यं क्षणिकं भवति। वस्तुतः सौन्दर्यस्य स्थितिर्हृदय एव भवति। रसानुभूतिरेव वस्तु

दर्शयति। श्रमणसंस्कृतिरिन्द्रियसम्भूतमानन्दं सौन्दर्यहेतुं न स्वीकरोति। इन्द्रियाणां नश्वरतया सौन्दर्यस्य तदुत्तीर्णतया च शिवत्वप्राप्त्यै सौन्दर्यं यद्यपि यतते, किन्तु सौन्दर्येण सन्तोष एव जायते, न पुनर्ज्ञानम्। 'सत्यम्' ज्ञानस्य हेतुः, 'सुन्दरम्' च सन्तोषस्य। श्रमणसंस्कृतेः सन्तोषो निवृत्तिपरो वर्तते। अतः सत्येनैव शिवत्वप्राप्तिः सम्भाव्यते। सौन्दर्यमपि न भवत्युपेक्षणीयम्।

## आनन्दः

विश्वकवे रवीन्द्रस्य वाक्यमेतत्—"यत्र वयं सत्यमुपलभामहे तत्रैवानन्दस्यापि प्राप्तिः; यत्र च न सत्यस्य सर्वाङ्गीणा उपलब्धिस्तत्रानन्दस्याऽप्यभाव एव।" ( साहित्य पृ० ५३ )

सत्याश्रित एवानन्दः स्वाभाविकः, पार्थिवानन्दस्तु क्षणिकः, शाश्वतः पुनः स्वात्मानन्द एव। एनमेव श्रमणसंस्कृतिः सङ्केतयति। प्राचीनतमादैतिहासिककालादारभ्यास्यैवानन्दस्योपलब्धये जैनमुनयो दीर्घतमं साधनपथमाश्रयन्तो दृश्यन्ते। नूनं स्वीकर्तव्यमेवैतद् यत् सत्याश्रितस्य वास्तविकस्य सौन्दर्यस्य साधनमेव श्रमणसंस्कृतेराधारशिलारूपेण परिदृश्यते। अत एव तैरुपस्थापितायां कलायां केवलकल्पनारहितस्य व्यक्तिनिरपेक्षस्य चानन्दस्य सहजा स्थितिरुपलक्ष्यते। 'अरस्तू' महाशयो निगदति—'येनानन्देन समाजो नोपक्रियते, स हि नोच्चैः श्रेणीमधितिष्ठति'। 'कान्ट'-'हेगेल'प्रभृतयो 'जर्मन'दार्शनिकाः कलासम्भूतमानन्दं निरपेक्षं मन्वते। सत्यसिद्धान्तप्रोतजीवनैरेव तादृशो निरपेक्ष आनन्दोऽधिगम्यते। अन्तर्मुख्याश्रित्तवृत्तेर्विकासतारतम्येनैवानन्दानुभूतिरप्युपजायते। भारतीयदर्शनान्यपि सिद्धान्तममुमेवानुगच्छन्ति। भारतीयचित्रशिल्पकाव्यकलासु सत्याश्रितस्यास्यैवानन्दस्य विकासः। भारतीया मुनयः सामयिकीं परिस्थितिमनुरुद्ध्य नीतिमत्तां सामाजिकपरिवर्तनानि च सम्यगालोचयन्तो बबन्धुः स्वकलाविन्यासान्।

यत्रानन्दस्तत्र रसोऽपि तिष्ठति, मानवजातेर्बहुषु परिवर्तनेष्ववस्थासु च रस एव महत्कारणमुच्यते। रसेनैव परिस्थितिः परिचाल्यते, रस

स्वानुभूतेर्निदानम् । रसस्य संवित् सुखात्मिका दुःखात्मिका वेत्यत्र प्राचामर्वाचां च मतभेदः श्रूयते । आस्तामेतत् ।

यस्य प्रमातुर्यथा रसानुभवशक्तिः स तथा तावन्तमेव सौन्दर्यानुभवमवगाहते । अभिनवगुप्ताचार्यैः काव्यशक्तिरिव रसज्ञतापि दैवी शक्तिरित्यवोचि । अत एव कलायां सर्वेषामनुभूतिः समकक्षा भवितुं नार्हति । कला खलु कल्पनाबहुला, मनोऽपेक्षया हृदयेनैव तस्याः सम्बन्धः । कलायामनेकानि चिन्त्यानि तत्त्वानि तिष्ठन्ति । कला तथ्यपर्यन्तं प्रमातारं नयति, न पुनः सत्यपर्यन्तम् । श्रमणैः कलायां सत्यं प्रतिष्ठापितम् । न तेषां तथ्यान्वेषणे संरम्भः सत्यं हि वस्तुनः प्राणाः ।

श्रमणसंस्कृतौ जगतः किमपि वस्तु एकान्ततो नित्यमनित्यं वा नास्ति । एतन्मतानुसारेण विश्वस्मिन् किमपि सुरूपं कुरूपं वा नास्त्येव । प्रतिवस्तु रसः सौन्दर्यमानन्दश्च स्थित एव, परन्तु रसानुकूलां वृत्तिं विना तेषामुपलब्धिः सूपपादा नास्ति । अविशेषज्ञो हि जनः सुन्दरं कलामयं पदार्थमुद्वीक्ष्य क्षणमात्रं चमत्कारमनुभवति, न पुनर्मार्मिकैकसंवेद्यं गम्भीरं रसानुभवम् । विना प्रकृतेः सौन्दर्यस्य सिद्धान्तानां गहनं ज्ञानं तदनुभवो दुरवगाहः । अत एव रसानुकूला वृत्तिरप्यावश्यकी । बहुधा कलाविदो दृष्टिर्यत्राऽऽकृष्यते तत्र साधारणा जना दृशमपि न ददति । यतस्ते तन्मर्म ज्ञातुमेव न प्रभवन्ति । एतावता सौन्दर्यमसौन्दर्यं वा व्यक्तिदृष्टेरधीनमिति ज्ञानत एव । बहवः कलाकोविदा गगने भ्राम्यतो जलधरान् नदीषु समुद्रे वा तरङ्गभङ्गान् पश्यन्तो विस्मृतात्मान इव गच्छन्तमपि भूयांसं कालं न कलयन्ति । अहमपि यदा क्वचन भग्नावशेषस्थानं प्राप्तः पश्यामि खण्डश उपलभ्यमानान् मूर्तिप्रस्तरभागान्, तदा किमपि शब्दैरनिवेद्यं भावसमुद्रमुच्छलन्तमन्तरनुभवन् कामप्यतिविचित्रां दशामासादयामि । किमस्योत्तरं स्यात् स्वानुभूतिं विहाय ?

एवं ग्रहीतृभेदादेव रसानुभूतिर्विलक्षणेति स्फुटमेव । यदि तत्र कश्चन भौतिकः स्वार्थहेतुरुदेति भावस्तर्हि रसभङ्ग एव भविता । श्रमणसंस्कृतिः भौतिकं सम्बन्धमपहाय केवलं विशुद्धमानन्दमेव प्रवेष्टुमादिशति । यथा यथाऽऽवरणक्षयस्तथा तथा विशुद्धं तत्स्वरूपमुन्मीलति । अयञ्च

योगिसंवेद्यो निर्विकल्पक आनन्दः। सविकल्पको द्रव्याश्रितश्चानन्दो रसवृत्तिमवश्यमारभते। परन्त्वसौ साधनरूप एव न साध्यः। वर्त्तमानाः श्रमणसंस्कृतेरनुयायिनः साधनचाकचिक्यव्यामोहिताः साध्यमुपेक्षमाणा इव दृश्यते। विश्वस्मिन् त्रय एवानन्दा उच्यन्ते—आत्मनन्दो रसानन्दो विषयानन्दश्च। तत्र ब्रह्मानन्दः (आत्मानन्दः) एव सर्वतः प्रधानभूतः। उभावानन्दावेनमेवोपजीव्य प्रवर्तेते। तत्र विषयानन्दो लौकिकः, रसानन्दस्त्वलौकिकः। उक्तञ्च—'एतस्यैवानन्दस्य अन्ये आनन्दा मात्रामुपजीवन्ति' इति। श्रमणसंस्कृतिरेवमेवानन्दं लक्ष्यीकरोति।

संस्कृतसाहित्यसमालोचकैरानन्द एव रस इति निर्णीतम्, रसो वै सः' इत्याद्युक्तिबलात्। एतत्त्ववधेयं स्यात्, प्रकृतिसौन्दर्यजन्य आनन्दो भिन्नः कलानिर्मितिजश्च भिन्न एवेति। ललितकलांगेषु शिल्पचित्रनृत्यकाव्यसङ्गीतादिषु परममुद्देश्यं रससृष्टिरेव भवति। कविः कलाविद् वा प्रकृतिनिरीक्षणोत्पन्नान् भावान् कल्पनारागेणोपरज्य सौन्दर्यमयरूपेणोपस्थाप्य च रसमनुभावयितुं चेष्टते। साधूक्तं विश्वकविना—'मानवः स्वकाव्येषु चित्रेषु शिल्पेषु च स्वयं प्रकाशते' इति। ( साहित्य० ५३ )

साधनानि भाषा तूलिका टङ्को वा भवतु, साध्यं सर्वेषां समानमेव। कलाविदः सर्वे समा एव। भावप्रधानं जीवनमनुभवन्तः सूक्ष्मसूक्ष्मभावोद्बोधने कुशलाः कलाविदः कस्य वा राष्ट्रस्य महती सम्पत्तिर्नोच्येत ?

इदानीं यावद् मया भारतीयपरम्पराया एव सिद्धान्तः प्रणाली चोपदर्शिता, परन्तु साम्प्रतिके युगे यावत्सीमोल्लंघनं न स्यात् तावत्परितोषो न भवतीति साम्प्रतिकसामाजिकदशाऽपि विवेचनमावश्यकम्। परिवर्तनमपि जगतः कालस्य वा स्वभावः। परिवर्तनशीलं राष्ट्रमेव नवे युगे स्वसत्तां धारयितुं प्रभवेत्, नेतरत्। गतः साम्राज्यवादस्य डिण्डिमघोषः। अधुना प्रजातन्त्रं शासनमेव समर्थयमाना संस्कृतिः स्वाश्रितानुन्नमयितुं प्रगल्भते।

प्रसङ्गतः वक्तव्यमिदं यत् कला प्रयोगात्मिका सौन्दर्यञ्च स्वभाविकं भवतीति। कलाविदो हि कलायां कल्पनासंवलितानि मानसिकचित्राणि

सुव्यवस्थिततया शृङ्खलयोपस्थापयन्तीत्येतदेव तेषां चातुर्यम्। कल्पना च सौन्दर्यं सृजति। अत एव कल्पना सोद्देश्या वर्तते। न च कल्पनाप्रसूतमेव सुन्दरं स्यादित्यस्ति नियमः। कल्पनादौर्बल्ये कलाविदः परिश्राम्यन्तोऽपि सामाजिकैर्नाद्रियन्त इत्यपि दृष्टमेव। अत एव समीक्षकैः 'नियन्त्रिताना कल्पनानां सन्ततिरेव 'कला' इत्युद्घुष्यते। कलाविद् हि आत्मस्थान् भावान् पार्थिवैरुपादानैरानन्दोन्मत्तः सन्नभिव्यञ्जति। कलाविदो ह्यानन्दो लौकिकानन्दादन्य एव। स्वशक्त्यनुसारेण कलावित् प्रकृतिगतं सौन्दर्यं स्वकृतिद्वाराऽनुभावयितुं चेष्टते। उपादानभेदाद् द्वयोः पर्याप्त एव भेदः कलाकारः प्राकृते सौन्दर्ये रसमुद्दीपयितुं शक्नुयात्, परन्तु प्रकृतिं साकारां कर्तुं नैव प्रभवति यतो भावमयं कलाविदो जगत्, भावमयता खल्वपरिच्छिन्ना। ततश्च कथमसौ परिच्छिन्नं निर्मातुं शक्नुयात्?

तथापि कलाऽऽकृती रसमुल्लासयेदेव, एतदप्यस्मदभीष्टमस्ति। श्रमणसंस्कृतिस्तावद् रसरूपमुपादानमप्यङ्गीकरोत्येव। आत्मस्थसौन्दर्योद्बोधाय रस एव व्याप्रियते। एतेन जैनशिल्पकलाया उद्देश्यं स्फुटीभवति। तत्र हि परमवीतरागस्य परमात्मन आकृतीनां वस्तुतः समुट्टङ्कनस्याशक्यतया तत्प्रतीकरूपैः शिल्पविन्यासैरेव ता उपदर्शिता भवन्ति। तेनापि तन्महत्त्वं प्रत्यभिज्ञायते। तासु मुखमुद्रया सौम्यत्वं शरीरविन्यासैरन्ये भावाश्च प्रोद्भवन्ति। को वा ता अवलोक्य भावमग्नो न स्यात्? श्रमणैरनया दिशा सौन्दर्योपासना भूयसी पिहिता। परमियं परम्परोपदानाश्रितसौन्दर्यरूपा साधनात्मिकैवासीत्, तावत् साध्यात्मिका; परन्तु समाजस्तस्य वास्तवमुद्देश्यं विस्मृत्य तथा संवृत्तो यत्कलामप्यसौ नितान्तमुपेक्षते।

## सौन्दर्यम्

पूर्वमुक्तमेवैतद् यत् कला सौन्दर्यापेक्षिणी भवति। वस्तुतः कलाया इव सौन्दर्यस्यापि इदमित्थमिति निष्कृष्टं लक्षणं शब्दैः प्रतिपादयितुमशक्यमेव। तथापि योऽत्र केषाञ्चित् प्रयासः स उपदर्श्यते—'अध्यात्माऽऽभासः', 'परमतत्त्वस्यापार्थिवताया पार्थिवे जगत्यपरतत्त्वेन विस्तारः',

'निः सीम्नः ससीमरूपम्', 'नानारूपे जगति अन्तरात्मन उद्योतः' इत्यादि। इतोऽप्यधिकं वैज्ञानिक्या दृष्ट्या केचिद् व्याचक्षते—'बाह्यपदार्थानां या च्छायाऽभ्यन्तरे प्रतिबिम्बिता भवति, तयैव सौन्दर्यभावनाया उदयः सैव च तस्या मानदण्डः, तयैव तस्या निर्वाहश्च' इति। बहूनि व्याख्यानानीतराण्यप्युपलभ्यन्ते। सौन्दर्यं हि न शब्दाश्रितम्, अपि तु भावाश्रितमेव। तत्रेयमुक्तिरपि द्रष्टव्या—

"उक्तिवैचित्र्येण, काव्यमयोद्गारैर्वा चमत्कारः शक्य उत्पादयितुम्; भावमयं जगदपि शक्यमान्दोलयितुम्, परं तथ्यनिरूपणैर्वैज्ञानिकसमीक्षया सहेतुकव्याख्यानैरूहापोहैः सिद्धान्तनिरूपणैर्वा सत्यप्रतिष्ठा नैव सम्पादयितुं शक्या।" ( हिमालयः १२, पृ० १६ )

निःसन्देहं सीमातीतं सत्यं व्याख्यानैः शृङ्खलयितुमयोग्यमेव। रसानन्दमयी सुखसंवित्तिरेव सौन्दर्यानुभूतिः। 'सौन्दर्यं ज्ञानेन्द्रियसमवेतं ज्ञानम्' इत्यपि कथ्यते। अनुभूतेः साधनानि तान्येवेन्द्रियाणि। संस्कृतवाण्या महाकविना माघेनाप्युक्तम्—"क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः"। इति।

अयमेवाशयः 'कीट्स'कविना शब्दान्तरैरुपवर्णितः। हिन्दीभाषायाः कविभिरपि उच्यते—

"ज्यों ज्यों निहारिये नेरे ह्वै, त्यों त्यों खरी निखरे सी निकाई।"
"जनम अवधि रूप निहारल, नयन न तिरपत भेल।"

( विद्यापति )

असाधारणीं कलामयीं कृतिं दृष्ट्वा यो भावोदयस्तदपि सौन्दर्यमेव, तदुपलब्धिस्तु श्रुतिचक्षुर्भ्यां जायते। कवीन्द्रोऽप्याह—न केवलं चक्षुर्भ्यामपि तु तदनुगामिना मनसैव यथार्थं सौन्दर्यमवबुध्यते' इति। ( साहित्य पृ० ४२ )

सौन्दर्यं नाम सर्वजनोपभोग्यं तत्त्वम्। एकस्याः कृतेः सहस्रं प्रेक्षका वर्तन्ताम्, परं तन्न क्षीयते। यतस्तेन सह नास्माकं सप्रयोजनः सम्बन्धः।

अद्यत्वेऽपि सौन्दर्योपासका न न्यूनाः, किन्तु विशुद्धा सौन्दर्यदृष्टिस्तु न सर्वसुलभा भवति। कस्याश्चित् कामिन्या अनुधावनमेव न सौन्दर्य-सेवा, तत्तु पतनस्यैव कारणम्। सौन्दर्योपासकस्तावदतीव संयतो धीरश्च भवेत्, तत एव तस्य वास्तविकं ज्ञानमुत्पद्येत्। उच्छृङ्खलता हि सौन्दर्यं विघटयति बुद्धिञ्च भ्रंशयति। उक्तञ्च रवीन्द्रेण—

"सौन्दर्यस्य सम्पूर्णोपभोगाय संयम आवश्यकः, अनन्तं सौन्दर्यं मनुष्यं संयममार्गे नयति, अन्तरङ्गस्थं सौन्दर्यमनुद्बोध्य बाह्यसौन्दर्य-मास्वादयितुं न शक्यते" इत्यादि।

भारतीयसंस्कृतौ संयमनियमानां स्थानमतीव महत्त्वशालि विद्यते। मानवजातेर्वास्तविको विकास एतैरेव सञ्जायते। श्रमणसंस्कृतिरमुमेव सिद्धान्तं स्वीयाभिः कलाकृतिभिरुपस्थापितवती। जीवनव्यवहारे च संयमनियमानां प्रणाली तथैव प्रवर्तिता। परमवीतरागैः परमात्मभिः स्वजीवने कठोरतराभिः साधनाभिरात्मस्थं सौन्दर्यं प्रत्यक्षीकृतम्। तदनुभूतिमेव परम्परयाऽऽश्रान्त्या श्रमणसंस्कृत्या अद्य यावदयं महार्घो निधिः सुरक्षितस्तिष्ठति।

सैव वास्तविकी कला भवति या जीवनं सुखमयं शान्तिमयञ्चापादयेत, आत्मानन्दश्च यथावगाढः स्यात्। यदि कलायाः सौन्दर्यस्य चोपयोगो विलासमयीनां प्रवृत्तीनां सन्धुक्षणाय कल्पते, तर्हि 'ग्रीस'-'रोम'प्रभृति-देशवदस्य देशस्याप्यधःपात एव भवेत्, परन्तु सौभाग्येन भारतीया कला धर्मे प्रतिष्ठिता सती निर्मलमादर्शमुपोद्बलयति। पाश्चात्त्यानां कला निरीक्षणप्रधाना, पौरस्त्यानां भावप्रधाना धर्मप्रधाना चास्ति। पाश्चात्त्यानां कलया जडवाद एव व्याख्यायते, भारतीया कला त्वात्मपूजाम् (ब्रह्मसमाधिम्) अलौकिकमानन्दं वानुगच्छति।

## ललितकलाः

कलायाः समुचितपरिचयानन्तरं ललितकलामन्वीक्षितुं वयं प्रवर्ता-महे। इयं कला न केवलं सूक्ष्ममानन्दमेव ददाति, किन्तु जीवनदर्शनाय मानवं प्रेरयति, दृष्टिमपि स्थिरीकरोति। अत एवेयं गुणप्रधाना।

कालिदासेनापि ललितकलानाम गृहीतम्—'ललिते कलाविधौ' ( रघुवंशः )। इयमस्माभिर्द्विधा विभज्यते—गतिशीला स्थितिशीला चेति। प्रथमकोटौ सङ्गीतनृत्ययोरतिरिक्तं काव्यानाञ्च समावेशः। अन्तरङ्गस्थामूर्तभावानां स्वरताललयादिभिर्व्यक्तत्वेनोपपादनमेव सङ्गीत-पदाभिधेयम्।

प्राचीनेषु स्थानाङ्गेषु सूत्रकृताङ्गेषु सङ्गीतविषयिणो बहव उल्लेखा दृग्गोचरीक्रियन्ते। भगवतो महावीरस्य कालेऽपि सङ्गीतस्य महती समुन्नतिरनुश्रूयते। देवानां देवीनाञ्च सङ्गीतचर्चा बहुलाऽऽसीत्। प्रभुगुणगाने सङ्गीतस्य वैपुल्यमासीत्। सङ्गीतद्वारा प्रवर्तिता विचाराः स्थायिनः शीघ्रगामिनश्चानुभूयन्ते। सङ्गीतं जीवजातस्य मनोहरमा-कर्षकञ्च वर्तत एव। मध्यकालिकसङ्गीतशास्त्रविकासे श्रमणसंस्कृते-र्महान् सहयोग आलक्ष्यते। एकस्मिन्नेव समये शास्त्रीयसङ्गीते बहूनि परिवर्तनान्यभ्यजायन्त।

## शिल्पं चित्रञ्च

स्थितिशीलकलासु शिल्पञ्चित्रञ्च समाविशति। श्रमणसंस्कृत्याश्र-यिण्याः शिल्पकलायाः संस्कृत्यपेक्षया कलात्मिकयैव दृष्ट्या वैशिष्ट्यमा-लक्ष्यते। तत्तत्कलानामुत्कृष्टानि चिह्नानि पादलिप्तपुर-तारगा-आबू-अहमदाबाद-देवगढ-श्रवणवेलगोलाप्रभृतिस्थानेषु दरीदृश्यन्ते।

चित्रकलाया निदर्शनानि ज्ञानभाण्डागारेषु सुलभदर्शनानि। शिल्प चित्रं भिन्नमपि रूपोल्लेखात्मकसादृश्यादभिन्नप्रायम्। एवं श्रमणसंस्कृतिं-राध्यात्मिकाऽऽधारेण पर्याप्तं सौन्दर्यमुद्बोधयतीति।



# परिशिष्टम्

## ( क ) लौकिकन्यायमाला

स्थालीपुलाकन्याय—एक चावल को देख सारी बटुली का अन्न पका जानना ।

घुणाक्षर-न्याय—आकस्मिक घटना का घटित होना, अन्धचटक-न्याय ।

अरण्यरोदनन्याय—जंगल में मोर नाचा किसने देखा ?

काकतालीयन्याय—दो वस्तुओं का आकस्मिक संयोग ।

अन्धगजन्याय—किसी वस्तु के पूर्णरूप को न जानकर उसके अङ्गमात्र से पूर्णरूप की कल्पना करना ।

कूपमण्डूकन्याय—अपनी सीमित परिधि में रहकर सांसारिक आवश्यक बातों से अनभिज्ञ रहना ।

गड्डलिकाप्रवाहन्याय—भेड़िया-धसान ।

दण्डापूपिकन्याय—एक वस्तु की जो दशा है तत्संबद्ध वस्तु की भी वही दशा होना ।

देहलीदीपन्याय—एक साधन से दो साध्यों को सिद्ध करना ।

षड्गबन्धन्याय—पारस्परिक सहयोग देना ।

सूचीकटाहन्याय—किसी बड़े कार्य को करने के पूर्व छोटे कार्य को समाप्त कर लेना ।

अन्धदर्पणन्याय—अन्धे के हाथ में आरसी ।

आम्रसेकपितृतर्पण-न्याय—एक पन्थ दो काज । 'एका क्रिया द्व्यर्थकरी प्रसिद्धा' ।

खलेकपीतन्याय—एक ही स्थान पर सदृश अनेक वस्तुओं की प्राप्ति ।

अन्धकवर्तकीन्याय—अन्धे के हाथ बटेर ।

मात्स्यन्याय—जिसकी लाठी उसकी भैंस। बलवान् के द्वारा कमजोर का सताया जाना।

अहिनकुलन्याय—परस्पर सदा विरोध का बना रहना।

सिकतातैलन्याय—असंभव कार्य की सिद्धि में लगना।

धान्यपलालन्याय—सार को ग्रहण कर असार वस्तु को छोड़ देना; 'असारात् सारमाहरेत्'।

काकदन्तगवेषणन्याय—किसी व्यर्थ या असंभव कार्य के पीछे पड़ना।

काकाक्षिगोलकन्याय—किसी वाक्य में प्रयुक्त एक शब्द से आवश्यकतानुसार दो अर्थों का बोध करना।

पङ्कप्रक्षालनन्याय—किसी रोग की औषध करने की अपेक्षा रोग न होने देने का प्रयत्न करना।

विषकृमिन्याय—धिक् जीवन व्यतीत करना।

सिंहावलोकनन्याय—बीती हुई वस्तु का पुनरावलोकन।

स्थूणातिखननन्याय—किसी वस्तु को प्रमाणों से और अधिक पुष्ट करना।

शाखाचन्द्रन्याय—दूर वस्तु का तत्सम्बद्ध वस्तु से परिचय कराना।

स्वामिभृत्यन्याय—स्वामी तथा सेवक का पारस्परिक संबंध।

अरुन्धती-दर्शनन्याय—सूक्ष्म वस्तु के ग्रहण कराने के लिये समीपस्थ स्थूल वस्तु का प्रदर्शन।

अश्मलोष्ट्र-न्याय—दो बुरी वस्तुओं में से कम बुरी वस्तु का ग्रहण करना।

आकाशमुष्टिहनन-न्याय—आकाश में महल उठाना। हवाई किले बनाना, ख-पुष्प की कल्पना।



## ( ख ) सुभाषितानि

अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ?
आरब्धे हि सुदुष्करेऽपि महतां मध्ये विरामः कुतः ?
इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ।
कोऽतिभारः समर्थानाम् ।
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद्बुधैरप्यपथेन गम्यते ।
तीव्रसत्त्वस्य न चिराद्भवन्त्येव हि सिद्धयः ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ।
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ?
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ।
न भवति पुनरुक्तं भाषितं सज्जनानाम् ।
निस्सारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ।
पङ्को हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्धनि ।
परसदननिविष्टः को लघुत्वं न याति ।
पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामरः पिबति ।
महान् महत्येव करोति विक्रमम् ।
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ।
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ।
तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।
यो यद्वपति बीजं हि लभते सोऽपि तत्फलम् ।
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
सन्तोष एव पुरुषस्य परं निधानम् ।

सम्पूर्णकुम्भो न करोति शब्दम्।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा।
न रत्नमन्विष्यति मृग्यते हि तत्।
क्लेशः फलेन हि पुनर्नवतां विधत्ते।
न कामवृत्तिर्वचनीयमिक्षते।
गुरुतां नयन्ति हि गुणा न संहतिः।
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः।
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु।
को धारयति न कण्ठे सत्काव्यं माल्यमर्घ्यं च ?
निराश्रया हन्त हता मनस्विता।
सहसा विदधीत क्रियामविवेकः परमापदां पदम्।
न वञ्चनीयाः प्रभवोऽनुजीविभिः। ( किरातार्जुनीयम् )
हितं मनोहारि च दुर्लभं वचः।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः।
न तितिक्षासमस्ति साधनम्।
गुणगृह्या वचने विपश्चितः।
भवन्ति भव्येषु हि पक्षपाताः।
प्रकर्षतन्त्रा हि रणे जयश्रीः।
विश्वासयत्याशु सतां हि योगः।
सत्संगतिः कथय किं न करोति पुंसाम्।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते।
सम्पत्तौ च विपत्तौ च महतामेकरूपता।
न खलु वयस्तेजसो हेतुः।
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।
न निश्चितार्थाद् विरमन्ति धीराः।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः।
खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत्।

मार्गस्थो नावसीदति ।
वचने का दरिद्रता ।
शरीरमाद्यं खलु धर्मसाधनम् ।
पराभवोऽप्युत्सव एव मानिनाम् ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण । (मेघदूतः)
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय । ( „ )
याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा । ( „ )
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ।
सदाभिमानैकधना हि मानिनः । (शिशुपालवधः)
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ( „ )
कथापि खलु पापानामलमश्रेयसे यतः । ( „ )
सर्वः स्वार्थं समीहते । ( „ )
समय एव करोति बलाबलम् । ( „ )
मूढः परप्रत्ययनेयबुद्धिः । (मालविका०)
कार्यं निदानाद्धि गुणानधीते ।
अपां हि तृप्ताय न वारिधारा, स्वादुः सुगन्धिः स्वदते तुषारा ।
क्व भोगमाप्नोति न भाग्यभाग् जनः ।
मितञ्च सारञ्च वचो हि वाग्मिता ।
चकास्ति योग्येन हि योग्यसङ्गमः ।
सिते हि लक्ष्येत शितेः सुलक्षता ।
आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ।
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ।
केषां न स्यादभिमतफला प्रार्थनाभ्युन्नतेषु ।
ते हि नो दिवसा गताः ।
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ।
नीचो वदति न कुरुते, न वदति सुजनः करोत्येव ।
कर्णान् विध्यति लोकस्य सूचीवत् सूचकस्य वाक् ।

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः। (शाकुन्तलम्)
किमिव हि मधुराणां मण्डनं नाकृतीनाम्। ( „ )
अथवा भवितव्यतानां द्वाराणि भवन्ति सर्वत्र।
स्वार्थात् सतां गुरुतरा प्रणयिक्रियैव ( वि० व० )
छिद्रेष्वनर्था बहुलीभवन्ति।

स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः। ( मृच्छकटिकम् )
न ह्याकृतिः सुसदृशं विजहातिवृत्तम्। ( „ )
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः। (मुद्राराक्षसः)
अहो चित्राकारा नियतिरिव नीतिर्नयविदाम्। ( „ )
कलत्रहरणे पुंसां कियदर्णवलङ्घनम्। ( बालरामायणम् )
रसनासु च सुकवीनां निवसति सारस्वतं चक्षुः। ( „ )
सतां प्रज्ञोन्मेषः पुनरयसीमा विजयते। ( „ )
शुद्धा हि बुद्धिः किल कामधेनुः। ( वि० शा० भ० )
न चन्द्रिकां क्वचिदशीतरुचिः प्रसूते। ( वि० शा० भ० )
न मालतीदाम विमर्दयोग्यम्। ( वि० शा० भ० )
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः। ( प्रबोधचन्द्रोदयः )
तटस्थः स्वानर्थान् घटयति च मौनञ्च भजते। ( मालतीमाधवः )



## ( ग ) रमणीयप्रयोगाः

**संस्कृतशब्दाः** **भावार्थः**

**सूचितभेद्यं तमः**—सूई से छेदने योग्य अन्धकार, अर्थात् अत्यन्त घना अँधेरा।

**गड्डलिका-प्रवाहः**—भेड़िया-धसान, अर्थात् विना समझे-बूझे काम करना।

**गजनिमीलिका**—जो बात अत्यन्त प्रत्यक्ष हो उसे न मानना।

**गण्डस्योपरि स्फोटः**—घाव के ऊपर फुंसी का उत्पन्न हो जाना, अर्थात् जले पर नमक छिड़कना। एक दुःख के ऊपर दूसरा दुःख होना।

छिद्रेण लब्धावकाशः—छेद के द्वारा स्थान प्राप्त करना, अर्थात् किसी की कमजोरी से अनुचित लाभ उठाना।

पिण्डितोऽर्थः—पिंडीभूत अर्थ अर्थात् वाक्य या वचन का सारांश।

मृत्पिण्डबुद्धिः—मिट्टी के लोंदे के समान जिसकी बुद्धि हो, अर्थात् बिलकुल मूर्ख; गोबर-गणेश।

अतिभूमिं गतः—उच्चस्थान को पहुँचना।

अहमहमिकया प्रणामलालसाः—प्रथम प्रणाम करने के लिये स्पर्धा करना। अहमहमिकाः—सर्वप्रथम होने का प्रयत्न करना।

कथाप्रसंगः—कथा के बीच में। बातचीत के सिलसिले में।

वचनप्रत्ययः—बात पर विश्वास करना, अर्थात् किसी मनुष्य की प्रतिज्ञा पर विश्वास स्थापित करना।

चक्षुर्बध्नाति—आँख को बाँधना, अर्थात् आकर्षित करना।

अक्ष्णोः प्रभातमासीत्—आँखों में सबेरा होना, अर्थात् रात को देखते-देखते प्रातःकाल का हो जाना।

किं बहुना—अधिक से क्या, अर्थात् सारांश।

पश्चिमे वयसि—पिछली आयु में, ढलती हुई आयु में, अर्थात् बुढ़ापे में।

परिच्छेदातीतः—जिसकी परिभाषा न हो सके, जिसका वर्णन करना असंभव हो।

लुप्तार्थवचनम्—वह पदावली या बात जिसका अब प्रयोग न होता हो।

आत्मन्यप्रत्ययं चेतः—अपने चित्त में आत्म-विश्वास को न करना।

अन्तर्भेदाकुलं गृहम्—ऐसा घर या समिति जो आपस में ही विभक्त है, अर्थात् जिसमें पारस्परिक एकता नहीं है।

उद्घातिनी भूमिः—ऊँची-नीची भूमि।

स्वहस्तेनाङ्गाराकर्षणम्—अपने हाथ से अंगार उठाना, अर्थात् अपने ही आप अपना नाश करना।

द्वीपिचर्मपरिच्छन्नगर्दभः—सिंह के चर्म से आच्छादित गदहा, अर्थात् सज्जन के वेष को धारण करनेवाला नीच या दुष्ट मनुष्य।

चापलाय प्रचोदितः—मूर्खतापूर्ण कार्य करने के लिये प्रेरित या बाधित होना।

श्रवणगोचरे तिष्ठ—जहाँ तक सुनाई पड़ सके वहीं तक खड़ा होना, दूर नहीं।

महति प्रत्यूषे—बहुत तड़के। ब्राह्म मुहूर्त में।

पञ्चवर्षदेशीयो बालकः—पाँच वर्ष का बालक।

परमार्थेन ग्रहणम्—किसी विषय को सच्चा समझना।

लब्धं स्वास्थ्यं मया—मैंने स्वास्थ्य प्राप्त कर लिया, अर्थात् मैं सुखपूर्वक हूँ।

मारुतस्य रहः शिलोच्चये न मूर्च्छति—वायु का वेग पर्वत के ऊपर अपना प्रभाव नहीं करता, अर्थात् क्षुद्र वस्तु महान् पुरुषों के ऊपर अपना प्रभाव नहीं जमा सकती।

शृणु मे सावशेषं वचः—मेरी कहानी अन्त तक सुनो।

चेतसि पदं कृतम्—चित्त में स्थान कर लेना, अर्थात् हृदय में किसी बात का घुस जाना।

कथं कथमपि मुक्त—वह बाल बाल बच गया।

अप्रबोधाय शयनम्—सदा के लिए सो जाना, अर्थात् मर जाना।

मनोरथानामप्यभूमिः—जहाँ इच्छा भी नहीं पहुँच सकता, वास्तव में जाना तो दूर रहा।

उत्सर्गाः सापवादाः—नियम के अपवाद भी होते हैं।

अक्षिगतोऽहं तस्य—मैं उसकी आँख में गया हुआ हूँ अर्थात् मैं उसकी आँख का काँटा हूँ।

पर्याप्तमाचमनम्—खूब पेट भर पीना।

मन्मुखासक्तदृष्टिः—मेरी ओर ध्यानपूर्वक देखते हुए।

रन्ध्रान्वेषिन—छेद को खोजनेवाला, अर्थात् दोषदर्शी।

पुरस्कृतमध्यमक्रमः—मध्यम मार्ग का पालन करना।

विपद्विपदमनुबध्नाति—एक विपत्ति के पीछे दूसरी विपत्ति आती है।

प्रतिहतमंगलम्—अमंगल दूर हो। ईश्वर ऐसा न करे।

स्वनामत्यागं करोमि—मैं अपने नाम को बदल दूँगा, अर्थात् अपमान न सहूँगा।

कालावलीढः—मृत्यु के मुँह में गया हुआ।

दन्तैर्दन्तान्निष्पीडयन्—दाँतों से दाँत पीसना, अर्थात् बहुत अधिक क्रोध में होना।

कर्णपरम्परया श्रुता वार्ता—कनों-कान सुनी हुई बात।

तृणाय मन्ये—तिनके के समान समझता हूँ, अर्थात् किसी का अत्यन्त अनादर करना।

रागः शुक्लपटे स्थायी भवति—लाल रंग स्वच्छ वस्त्र के ऊपर ही स्थायी होता है, अर्थात् सच्चरित्र पुरुष में कलंक झट मालूम हो जाता है।

अव्यापारेषु व्यापारः—दूसरे के काम में हस्तक्षेप करना।

दैवदुर्नियोगः—भाग्य का उल्टा हो जाना।

नर्मभाषितम्—हँसी मजाक में कही गई चीज।

नेत्राभ्यां पानम्—नेत्रों से पीना, अर्थात् बड़े ध्यान से किसी को देखना।

दोषेऽपि गुणत्वमुपपादयितुम्—बुरी वस्तु से भी अच्छी वस्तु लेना, अर्थात् गुण का ग्रहण करना।

तिले तालं पश्यति—सरसों को पहाड़ के समान देखना, अर्थात् छोटी-सी वस्तु को बहुत बड़ा बना देना।

दुर्जातबन्धुः—गाढ़े समय में काम आनेवाला साथी।

क्षितेः शब्दपतिः—पृथ्वी का नाममात्र का राजा।

बहुलीभूतमेतद् वृत्तम्—यह बात सर्वत्र प्रसिद्ध हो गई है।

भूमिकाकल्पनम्—नाटक खेलते समय प्रत्येक व्यक्ति को अलग-अलग काम बाँट देना।

गृहीतक्षणः—प्रतिज्ञा कर देना।

भावितविषवेगः—विष से प्रभावित होकर अपने को दिखलाना।

किं निमित्तं ते सन्तापः—तुम्हारे दुःख का क्या कारण है?

तद्वचो मम हृदये शल्यं जातम्—उसकी बात मेरे हृदय में काँटे की तरह चुभ गई।

श्रुतिविषयमापतितम—सुनाई पड़ा, ज्ञात हुआ।

नार्हसि मे प्रणयं विहन्तुम्—कृपया मेरी प्रार्थना को अस्वीकार न कीजिये।

हृदि एनां भारतीम् उपधातुमर्हसि—इस बात को अपने हृदय में गाँठ बाँध लो, अर्थात सर्वदा स्मरण रक्खो।

अये ! सम्यगनुबोधितोऽस्मि—ऐ ! आपने तो मुझे अच्छी याद दिलाई।

दोषानपि गुणपक्षे स्थापयति—दोषों को भी गुण बतलाता है।

गमिष्याम्युपहास्यताम्—मैं हँसी का पात्र हूँगा। दुनिया मेरी हँसी उड़ायेगी।

सफलीकृत-भर्तृपिण्डः—अपने मालिक का नमक चुकाना।

मन्थरविवेकं चेतः—चित्त के द्वारा अच्छे-बुरे का विचार न कर सकना।

वचनीयमिदं व्यवस्थितम्—यह बुराई सदा के लिये स्थायी हो गई।

यदि नावसीदति गुरुप्रयोजनम्—यदि किसी बड़े काम का नुकसान हो।

समवायो हि दुस्तरः—एकता अत्यन्त कठिन है।

मित्राणां तत्त्वनिकषग्रावा विपत्—आपत्ति मित्रता की कसौटी है।

कालः कश्चित् प्रतीक्ष्यताम्—कुछ समय के लिये प्रतीक्षा करो।

लघुसन्देशपदा सरस्वती— संक्षिप्त वाणी या सन्देश।

युवानो विस्मरणशीलाः—जवान आदमी भुलक्कड़ हुआ करते हैं।

चिन्ताविषघ्नोऽगदः—चिन्ता को दूर करनेवाली दवा।

प्रसन्नस्ते तर्कः—तुम्हारा अन्दाजा बिलकुल ठीक है।

संह्रियतामियं कथा—बस, बात यहीं खतम कीजिये।

उदारः जल्पः—ठीक प्रस्ताव।

सुश्लिष्टमेतत्—यह बात यहाँ ठीक जमती है।

बधिराद् मन्दकर्णः श्रेयान्—न करने से कुछ करना अच्छा ही है।



## नवीन प्रकाशन

१ श्रीयुगलशतदलम् ( श्री राधाकृष्ण की मधुर लीलाओं पर आधारित संस्कृत-हिन्दी पद्यात्मक काव्य )। सत्यव्रत शर्मा 'सुजान' शास्त्री कृत (१९७५) ५०-००

२ नैषधचरितमहाकाव्यम् ( काव्य )। हर्ष कृत। मल्लिनाथ कृत संस्कृत टीका-सुरेन्द्रदेव शास्त्री कृत हिन्दी व्याख्या। प्रथम सर्ग (१९८७) १५-००
सुरेन्द्रदेव शास्त्री कृत चतुर्थ सर्ग १०-०० पंचम सर्ग १०-०० १-३ सर्ग ३५-००
१-५ सर्ग ५०-०० १-९ सर्ग ९०-००

'नारायणी' संस्कृत-'प्रकाश' हिन्दी व्याख्या। व्याख्याकार बायुनन्दन पाण्डेय। २-४ सर्ग भूमिका सुरेन्द्रदेव शास्त्री (१९८३) ३०-००
१३ वाँ सर्ग 'शरद' सं. हि. टी. व्याख्याकार डॉ० लालमणि तिवारी (१९८४) १०-०

३ कर्णभारम् ( नाटक )। भास प्रणीतम्। सरला-हिन्दी-व्याख्या, आंग्लानुवाद, टिप्पणी आदि। व्याख्याकार सुधाकर मालवीय (१९८५) १०-

४ वेदान्तसिद्धान्तमुक्तावली ( वेदान्त )। प्रकाशानन्दयति विरचित। आर्थर-वेनिस कृत सटिप्पण आंग्लानुवाद (१९८४) १००-

५ आङ्ग्लरोमाञ्चम् ( गीतिकाव्य )। ( गीर्वाणवाणी मण्डितम् )। संस्कृतानुवादक-हरिहर वि० त्रिवेदी तथा लक्ष्मीनारायण ओ० जोषी कृत आंग्लानुवादकश्च (१९७४) १५-००

६ वैयाकरणसिद्धान्तकौमुदी (व्याकरण)। भट्टोजिदीक्षित विरचित। पाणिनीय व्याकरणसूत्रवृत्ति, पाणिनीय शिक्षा, लिङ्गानुशासन तथा अकारादिक्रम से सूत्रों की सूची। सम्पादक कृष्णवल्लभाचार्य (१९८२) ४०-००

७ किरातार्जुनीयमहाकाव्यम् (काव्य)। भारवि विरचित। 'चन्द्रकला' संस्कृत-हिन्दी व्याख्या। टीकाकार शेषराज शर्मा। सर्ग ३-६ (१९८५) २०-०
प्रत्येक सर्ग ५-०

८ शिशुपालवधम् ( काव्य ) माघ प्रणीत। 'सर्वङ्कषा' 'अलका' संस्कृत हिन्दी व्याख्या। व्याख्याता व्रजभवन दास प्र० सर्ग १०-०
श्रीरामकुमार आचार्य द्वि० तृ० सर्ग २०-०
'चन्द्रकला' संस्कृत-हिन्दी व्याख्या। व्याख्याता शेषराज शर्मा चतुर्थ सर्ग ६-०
१-४ सर्ग ४०-०० १-६ सर्ग ६०-०० सर्ग ७, ८, ९ पृथक पृथक १०-०

९ संस्कृत-प्रथम-पाठ ( व्याकरण )। मूल लेखक जे० आर० बैलन्टाइन। हिन्दी भाषान्तरकार अमरनाथ पाण्डेय द्वि० संस्करण (१९८२) ५-०

---

अन्य प्राप्तिस्थान—(१) चौखम्भा ओरियन्टालिया
बंगलो रोड, ९ यू० बी० जवाहर नगर, दिल्ली-११०००७
(२) चौखम्भा भारती अकादमी, खजान्ची रोड, पटना-८०००४

